TRIVANDRUM SANSKRIT SERIES.
No. CIX.
Śrī Setu Lakṣmī Prasādamālā
No. XXI.

THE

# NYĀYASĀRA

OF

BHĀSARVAJÑA

With the Commentary Padapañcikā of
Vāsudeva Sūri

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of
Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1931.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०९.

श्रीसेतुलक्ष्मीप्रसादमाला ।

ग्रन्थाङ्कः २१.

श्रीभासर्वज्ञप्रणीतः

# न्यायसारः

वासुदेवसूरिकृतन्यायसारपदपञ्चिकाख्य-
व्याख्योपेतः ।

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण
के. साम्बशिवशास्त्रिणा
संशोधितः ।

स च
अनन्तशयने
महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितः ।

कोलम्बाब्दाः ११०६, क्रैस्ताब्दाः १९३१.

॥ श्रीः ॥

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

# PREFACE.

This is a rare commentary on the Nyāyasāra of Bhāsarvajña. The great Ācārya Bhāsarvajña is one of the highest authorities on Logic, celebrated in the councils of great logicians and scholars and famous are his unique logical tenets. Śrī Nārāyaṇa Bhaṭṭa speaks of him thus in the Mānameyodaya:—

'भासर्वज्ञश्च साङ्ख्यस्त्रिनयम्' ॥

Even from the first stanza,

"देवदेवमभिवन्द्य शाश्वतं योगिवृन्दहृदयैकमन्दिरम् ।
वासुदेवविदुषा विरच्यते न्यायसारपदपञ्चिका परम्" ॥

it is known that the name of the commentary is Padapañcikā, and that the name of its author is Vāsudeva. It could also be known from the sentence at the end of the Paricchedas,

इति श्रीमत्काश्मीरसूर्यसूरीन्द्रसूनुवासुदेवसूरिविरचितायां न्यायसारपदपञ्चिकायां प्रत्यक्षपरिच्छेदः समाप्तः ।

that he was a Kashmirian and son of Sūrya Sūrīndra.

We have no clear evidence to determine the date of this Vasūdeva. This Pañcikā amply illustrates the ancient style of the Bhāṣyas and the Vārtikas, elucidating as it does, the abstruse tenets of the science of Logic, in sweet and simple, short and lucid sentences, entirely untarnished by the characteristics of the dry, hard and involved style of the works of Jagadīśa and Gadādhara; and thus it is evident that it is more than five hundred years old. If the author of this commentary is just a Kashmirian by celebrity, as was Vāsudeva, the author of numerous poems like the Yudhiṣṭhiravijaya, who was well-versed in the various sciences, it is not improbable that both are identical. If that is so, he must be the court poet and friend of the author of the Mukundamālā, the great poet, King Kulaśekhara Rajaśekhara who lived during the latter part of the 8th and the earlier part of the 9th century A. D. And this early date is in keeping with our own inference based on the characteristics of style and it would be then evident that he is a Keralīya. A family of Tantrika Brahmins who migrated from Madura and settled in the village of Kumāranallur in Kottayam (Travancore) is even now called "Madhura Illom". So too, a family that might have migrated from Kashmir and settled in Kerala might be called Kashmirians and thus Sūryasūri might well

be designated a Kashmirian. And as the author of Yudhiṣṭhiravijaya is known as the son of Ravi (रवितनयः) the fact that our author is called the son of Sūrya (सूर्यसूनुः) would not militate against our conjecture and the practice *that is suggested in the illustration,*

'यथा हस्तमुखसंयोगविशेषाभ्यां बुभुक्षापिपासाप्रतिपत्तिः' (p. 117)

is another point that goes towards establishing that he is a Keraliya.

We hear of another work of this scholar, Bhūṣaṇabhūṣaṇa by name, to which he thus refers in the Pancika,
"एवं प्रतिज्ञाविशेषणहान्यादयोऽस्माभिर्भूषणभूषणेऽभिहितास्तत्रैव ज्ञातव्याः (p.81)
and if the Bhūṣaṇa is a work on Nyāya by Bhāsarvajña himself, Bhūṣaṇabhūṣaṇa might just be a commentary on it. We are making enquiries of that work and shall have occasion to refer to it in detail in the fulness of time.

Six manuscripts were utilized for the publication of this work. Five of these are three hundred years old and in Malayalam script.

The first of these belongs to Govinda Piṣaroti, Kailasapuram, Kaduthuruthi and is designated क.

The second and the third belong to the Swamiyar Matom, Munchira and are designated ख and ग.

The other two, designated घ and ङ, belong to Brahmadattan Namburippad, Kūdallūr.

And the sixth, designated च, is a transcript on paper from the Adyar Library, Madras.

We express our thanks to the owners of all these manuscripts and place this edition before the public.

Trivandrum,
28-12-1106.

K. SĀMBAŚIVA ŚĀSTRI.

## निवेदना ।

अपूर्वेयं कापि व्याख्या श्रीभासर्वज्ञप्रणीतन्यायसारस्य । प्रामाणिकसमस्तपण्डितगोष्ठीप्रसिद्धोऽयं श्रीभासर्वज्ञपरमाचार्यो न्यायशास्त्रस्य किमप्यसामान्यं प्रमातृप्रकाण्डम् । अन्यादृश एव च प्रमाणपरिग्रहसिद्धान्तोऽस्य सुप्रथितः । इदं प्रत्येवमाह मानमेयोदये श्रीमान् नारायणभट्टपादः—

"भासर्वज्ञश्च साङ्ख्यस्त्रितयम्"

इति ।

"देवदेवमभिवन्द्य शाश्वतं योगिवृन्दहृदयैकमन्दिरम् ।
वासुदेवविदुषा विरच्यते न्यायसारपदपञ्चिका परम् ॥"

इति प्रथमपद्येनैव व्याख्याया आख्या पदपञ्चिकेति कर्तृनामधेयं वासुदेव इति चावगम्यते । विशिष्य सोऽयं वासुदेवः,

'इति श्रीमत्काश्मीरसूर्यसूरीन्द्रसूनुवासुदेवसूरिविरचितायां न्यायसारपदपञ्चिकायां प्रत्यक्षपरिच्छेदः ।'

इत्यादेर्यथोचितं तत्तत्परिच्छेदपरिसमाप्तिघटिताद् वाक्यात् काश्मीरीयः कस्यचन सूर्यसूरीन्द्रस्य सूनुरिति ज्ञायते ।

अस्य च वासुदेवसूरेर्जीवितसमयादिनिर्धारणाय न किमपि स्फुटतरं प्रमाणमुपलभ्यते । जागदीशगादाधरादिनवीनग्रन्थजातपद्धतिं गन्धतोऽप्यनाजिघ्रता मधुरमधुरेण खण्डखण्डेन वाक्यजातेन निसर्गगहनं न्यायशास्त्रीयं सिद्धान्तं विविञ्चती पञ्चिकेयं बाढं प्राचीनमेव भाष्यवार्तिकप्रस्थानमुदाहरन्ती मार्की पञ्चशतसंवत्सरीतोऽनर्वाचीनेति सिध्यति । यदितु युधिष्ठिरविजयादिबहुकाव्यकर्तुः श्रीवासुदेवकवेरिवास्य काश्मीरीयत्वं तावत्प्रसिद्धिमात्रतो विश्राम्येत्, तदा स एव वा वासुदेवकविर्नैकशास्त्रपण्डितो महात्मास्याः पञ्चिकायाः कर्तेत्यपि सम्भावना नासम्भविनी । सत्येवं क्रिस्त्वब्दीयाष्टमशताब्द्युत्तरार्धस्य नवमशताब्दीपूर्वार्धस्य चान्तरविजयिनो मुकुन्दमालादिग्रन्थकर्तुः श्रीकुलशेखरराजशेखरस्य सदस्यः सुहृदयं तत्समसमयजीवी स्यादिति

सिध्यत्प्राक्तनत्वमस्मदभ्यूहितग्रन्थशैलीजरत्तमतया निकाममनुरुध्यते । सिद्धं चैतावता केरलीय इत्यपि । वञ्चिराज्यान्तर्गतकोट्टयपरिसरवर्तिकुमारनल्लूर्-देशे बहोः कालात् प्राक् मधुरानगरादागत्य लब्धप्रतिष्ठस्य कस्यचन तान्त्रिकद्विजकुलस्याधुनापि 'मधुर इल्लम्' इति व्यवहारवत् काश्मीरांगतस्य केरलप्रतिष्ठितस्य काश्मीरव्यपदेशोऽपि वस्तुतः सम्भवत्येवेति विचारे तु यथाश्रुतमेव सूर्यसूरेः काश्मीरत्वं सङ्गच्छते । युधिष्ठिरविजयादिकवे रवितनयव्यवहारात् प्रति अर्थवशसम्पन्नतया सूर्यसूनुरिति व्यवहारोऽपि नात्यन्तायास्वारसिकश्चिन्तकानाम् ।

'यथा हस्तमुखसंयोगविशेषाभ्यां बुभुक्षापिपासाप्रतिपत्तिः ।' (पृ० ११७)

इति विवेचने स्वीकृत उदाहरणप्रदर्शनाचारश्चास्य केरलीयतायामन्योऽयमुपष्टम्भकः सम्भाव्यते ।

अस्य च वासुदेवसूरेः कृतिरन्याप्युपश्रूयते नाम्ना भूषणभूषणम् इति । यत्किलैवमाह पञ्चिकायाम् —

'एवं प्रतिज्ञाविशेषणहान्यादयोऽस्माभिर्भूषणभूषणेऽभिहितास्तत्रैव ज्ञातव्याः ।' (पृ० ८१)

इदं च भूषणं भासर्वज्ञस्यैव मूलकारस्य प्रसिद्धं कृत्यन्तरं न्यायभूषणं स्यात्सम्भवेत् । तदीयग्रन्थव्याख्यानलिप्सया च निकाममनेनैव विरचितं स्यात् किमपि भूषणभूषणं नाम । तदन्वेषणप्रकाशनयोः श्रद्धावतामस्माकमन्यदद्दसीयं निरूपणं मन्ये तदात्वे भविता ।

अस्य ग्रन्थस्य प्रकाशनोपयोगिन्यः षण्मातृकाः । तत्र खवर्जं पञ्च मातृका मार्की त्रिशतवत्सरीवृद्धाः केरलीयलिपयश्च ।

तासु प्रथमा — कटुत्तिरुत्ति कैलासपुरं गोविन्दपिषारोटिस्वामिका क. संज्ञिता ।

अनन्तरे द्वे मुञ्चिरस्वामियारमठसम्बन्धिन्यौ ख. ग. संज्ञिते ।

अन्त्ये द्वे अपि कूटल्लूर् ब्रह्मदत्तन्नम्पूरिप्पाटुस्वामिके ङ. च. संज्ञिते ।

षष्ठी च मद्रनगरीयाड्यार्ग्रन्थशालातः प्रतिरूपितानीता यस्यास्मिन् ष. संज्ञा ।

आसां मातृकाणां स्वामिभ्यः प्रेरकेभ्यश्च सुबहु धारयन्नस्मि सद्यो ग्रन्थमिमं महाजनसमक्षमवतारयामि ॥

अनन्तशयनम्,
२४-१२-११०६.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणी ।

## प्रत्यक्षपरिच्छेदः ।



## अनुमानपरिच्छेदः ।

| विषयः. | पृष्ठम्. |
| --- | --- |

॥ श्रीः ॥

श्रीभासर्वज्ञप्रणीतः

# न्यायसारः

वासुदेवसूरिकृतन्यायसारपदपञ्चिकाख्य-

व्याख्योपेतः ।

---

देवदेवमभिवन्द्य शाश्वतं

योगिवृन्दहृदयैकमन्दिरम् ।

वासुदेवविदुषा विरच्यते

न्यायसारपदपञ्जिका परम् ॥

तत्र तावच्चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणायाभिमतदेवताप्रणतिपुरस्सरं श्रोतृजनमनस्समाधानार्थं सप्रयोजनमभिधेयं प्रतिजानीते —

प्रणम्य शम्भुं जगतः पतिं परं

समस्ततत्त्वार्थविदं स्वभावतः ।

शिशुप्रबोधाय मयाभिधास्यते

प्रमाणतद्भेदतदन्यलक्षणम् ॥

इति । शं सुखं भवत्यस्मादिति शम्भुः तम् । किंविशिष्टम् । जगतः त्रैलोक्यस्य पतिं स्वामिनम् । देवेन्द्रादीनामपि जगत्पतित्वमस्तीति तद्व्यवच्छेदायाह — परमिति । उत्कृष्टम् अनन्यप्रेष्यमित्यर्थः । इन्द्रादयः पुनरीश्वरप्रेष्य-

G. P. T. 1505. 500. 18-1-1105. B

त्वेन न परा इति भावः । परत्वं ब्रह्मादीनामप्यस्ति तद्व्य-वच्छेदार्थमाह— समस्ततत्त्वार्थविदामिति । प्रमाणोपपन्नं स्व-रूपं तत्त्वं, तेन विशिष्टा अर्थाः तत्त्वार्थाः, समस्ताश्च ते तत्त्वा-र्थाश्चेति समस्ततत्त्वार्थाः, तान् वेत्तीति समस्ततत्त्वार्थवित्, तं सर्वज्ञमित्यर्थः । सर्वज्ञत्वं योगिनामप्यस्तीति ततो विशेषं दर्शयति — स्वभावत इति । न साधनान्तरापेक्षया, किन्तु सर्वदेत्यर्थः । योगिनस्तु योगाभ्यासप्रसादसमासादिततत्त्व-ज्ञानादेव समस्ततत्त्वार्थविद इति कादाचित्कसार्वज्ञ्या इत्यर्थः । तम् इत्थम्भूतं प्रणम्य प्रकर्षेण भक्तिपुरस्सरं नत्वा । प्रमाणं च तद्भेदाश्च[2] तदन्ये च[3] प्रमाणतद्भेदतदन्ये, तेषां लक्षणम् इत-रेतरव्यावर्तको धर्मः । मया भासर्वज्ञेन अभिधास्यते । किम-र्थम् । शिशुप्रबोधाय । शिशव इव शिशवः प्रमाणादिपदार्थ-लक्षणज्ञानशून्याः शास्त्रार्थश्रवणयोग्या विवक्षिताः, न पुनः स्तनन्धयाः । तेषां प्रबोधाय तत्त्वज्ञानोत्पादनायेति प्रयोजन-कथनम् । अत्राबालानामपि शिशुशब्देनाभिधानं शुश्रूषयो-पपन्नाः[4] छात्राः शिशुवत् सस्नेहं व्युत्पादनीया इति ज्ञापना-र्थम् ॥

प्रमेयादिपरिज्ञानस्य प्रमाणाधीनत्वात् प्रथमोद्दिष्टस्य प्रमाणस्य सामान्य-लक्षणमाह —

**सम्यगनुभवसाधनं प्रमाणम् ॥**

इति । सम्यक् चासावनुभवश्चेति सम्यगनुभवः, तस्य साधनं करणं प्रमाणम् । प्रमीयते येन तत् प्रमाणमिति

१. 'नवशादे' ङ. च. पाठः. २. 'श्च प्रत्यक्षादयः त', ३. 'च प्रमेयादयः प्र' च. पाठः. ४. 'न्नाः शि' ङ. च. पाठः.

करणव्युत्पत्तेरिह विवक्षितत्वात् करणभूतस्य प्रमाणस्य लक्षणाभिधानम्। अतो नाव्याप्त्यतिव्याप्ती । अन्यथा प्रमितिः प्रमाणमिति फलभूतस्य ज्ञानस्यानुभवसाधनत्वाभावादव्याप्तिः स्यात्। अत्र सम्यक्त्वमनुभवत्वं च संशयत्वविपर्ययत्ववद् ज्ञानावान्तरजातिविशेषः । अबाध्यमनाध्यवसायात्मकत्वं सम्यक्त्वम् । स्मरणविलक्षणज्ञानस्वरूपत्वं पुनरनुभवत्वम्। विशेषणस्यातिप्रसङ्गापाकरणार्थत्वात् ॥

सम्यगित्यस्य विशेषणस्य व्यवच्छेद्यं दर्शयति —

**सम्यग्ग्रहणं संशयविपर्ययापोहार्थम् ॥**

इति। संशयविपर्यययोरपोहः संशयविपर्ययापोहः प्रमाणफलादनुभवाद् व्यावर्तनम् । संशयविपर्ययाभ्यां वापोहः व्यवच्छेदः प्रमाणफलस्य स एवार्थः प्रयोजनं यस्य तत् तथोक्तम्। यदा च संशयविपर्यययोरनपोहः तदा तत् साधनं प्रमाणं न भवतीत्यर्थः ॥

अज्ञातस्वरूपयोः संशयविपर्यययोरपोहो ज्ञातुं न शक्यत इति तदवगमार्थं तल्लक्षणमाह —

**तत्रानवधारणज्ञानं संशयः ॥**

इति । तत्र तयोर्मध्ये। अनवधारणं च तज्ज्ञानं चेति विग्रहः । न चावधारणाभाववाचकत्वादनवधारणशब्दस्य कथं ज्ञानशब्देन सामानाधिकरण्यमिति वाच्यम् । तस्यानिश्चयत्वजातिसहितव्यक्तिवाचकत्वात् ॥

तस्यावान्तरभेदमाह —

**स च समानधर्मानेकधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिकारणभेदात् पञ्चधा भिद्यते ॥**

इति। समानधर्मश्चानेकधर्मश्च विप्रतिपत्तिश्चोपलब्धिश्चानुपलब्धिश्च तानि कारणानि च तेषां भेदात्। अत्रासाधारणकारणभूतानां समानधर्मादीनां भेदात् संशयस्य भेदोऽभिहितः, न पुनः कारणमात्रभेदात्। अनेककारणजन्यस्यापि घटस्यैकत्वदर्शनात्। स च समानधर्मादसाधारणकारणाद् विशेषाग्रहणादीतरकारणगणसहिताञ्जायमानः संशयोऽनेकधर्मादिकारणजनितसंशयेभ्यो भिद्यत इति योज्यम्। एवमुत्तरत्रापि ॥

क्रमेण तेषां संशयानां स्वरूपमाह —

**तद् यथा समानधर्मात्—किमयं स्थाणुः पुरुषो वेति ॥**

इति। स्थाणुपुरुषयोः समानः साधारणो धर्म ऊर्ध्वत्वं, तस्मात्। तच्चोर्ध्वत्वव्यवहारकारणं सामान्यमवयवरचनाविशेषो वा। इतिशब्दः प्रकारार्थः। एवम्प्रकारः संशय उत्पद्यत इत्यर्थः। एवमुत्तरवाक्येष्वपीतिशब्दो व्याख्येयः ॥

द्वितीयं संशयमाह —

**अनेकधर्मात्—आकाशविशेषगुणत्वात् किमयं शब्दो नित्यः स्यादनित्यो वेति ॥**

इति। समानासमानजातीयमनेकमिहाभीष्टम्। अनेकस्माद् व्यावर्तको[३] धर्मोऽनेकधर्म इति मध्यमपदलोपी समासः। असाधारणो धर्म इति भावः। ननु स्थाणुत्वपुरुषत्वादिविरुद्धोभयविशेषैः सह समानधर्मस्योर्ध्वत्वस्य पूर्वमुप-

१. 'मत्वादी' च. पाठः. २. 'एवञ्च' ङ. पाठः. ३. 'र्तो ध' च. पाठः.

लम्भात् पश्चाद् दूरत्वादिनिमित्तेन विशेषद्वयाग्रहणेन समानधर्मः केवल एवोपलभ्यमानस्तत्स्मृतिद्वारेण संशयहेतुरिति युक्तम् । असाधारणस्तु धर्मो विरुद्धोभयविशेषैः सहादृष्टः । कथं तत्स्मृतिहेतुः । तदहेतुश्च कथं संशयोपाय इति । व्यतिरेकमुखेनेति ब्रूमः । तथाहि — नित्येभ्यो व्यावृत्तधर्मयोगी खल्वनित्यो दृष्टः । अनित्येभ्यश्च व्यावृत्तधर्मयोगी खलु नित्यो दृष्टः । शब्दस्तु नित्यानित्यव्यावृत्तेनाकाशविशेषगुणत्वधर्मेण युक्तः । तस्मादनित्यव्यावृत्तधर्मवत्त्वाद् नित्यः स्याद्, उत नित्यव्यावृत्तधर्मवत्त्वादनित्य इति सन्देहः । नन्वेवमपि समानधर्मासाधारणधर्मविप्रतिपत्तीत्यादिवाक्यं क्रियताम् । किमनेकधर्मग्रहणेनाप्रसिद्धप्रकृतार्थेनेति । सत्यम् । अनेकश्चासौ धर्मश्च अनेकधर्मः सोऽपि संशयहेतुरिति ज्ञापनार्थत्वाददोषः । तथाहि — विरुद्धार्थद्वयाविनाभूतधर्मद्वयस्यैकत्रोपलम्भाद् विशेषाग्रहणादिसहकारिणि च सति संशयो भवति । यथा क्रियावत्त्वान्मूर्तं मनः, किं वा स्पर्शशून्यत्वादमूर्तमिति । अनेकधर्मस्य तु विप्रतिपत्तिवदेव संशयहेतुत्वम् । विरुद्धार्थद्वयप्रतिपादकवचनद्वयं विप्रतिपत्तिः । विरुद्धार्थद्वयाविनाभूतधर्मद्वयं त्वनेकधर्म इति ,नानयोरत्यन्तभेदोऽस्तीति ॥

इदानीं विप्रतिपत्तिजनितसंशयं दर्शयितुकामो विप्रतिपत्तिस्वरूपमाह —

**विप्रतिपत्तेः—एके भौतिकानीन्द्रियाण्याहुरन्ये त्वभौतिकानीति ॥**

---

१. 'द्धार्थे' च. पाठः. २. 'पं तावदाह' ङ. पाठः.

एवंरूपाया विप्रतिपत्तेः सकाशात् किमिन्द्रियाणि भौतिकान्याहोस्विदभौतिकानीति संशयो मध्यस्थस्य विशेषमजानानस्य जायत इति शेषः ॥

चतुर्थपञ्चमौ संशयौ दर्शयति —

**उपलब्धेः—किं सदुदकमुपलभ्यते उतासदिति। अनुपलब्धेः—किं विद्यमानः पिशाचो नोपलभ्यते किं वाविद्यमान इति ॥**

इति। विधिमुखेन ज्ञानमुपलब्धिः। उपलब्ध्यभावोऽत्रानुपलब्धिः। नचात्र केवलोपलब्धिरनुपलब्धिर्वा संशयकारणं, येनातिप्रसङ्गः स्यात्। किन्तु विशेषाग्रहणादिसहकारिसाहिता। ततो नातिप्रसङ्गः। यद्यप्यनयोः समानधर्मान्न[1] भेदः, तथापि प्रयोजनवशात् सूत्रकारेण 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च—' इति पृथगभिहिते इति तदनुसारिणा सङ्ग्रहकृतापि पृथगुक्ते इति न दोषः। प्रयोजनं च परपक्षप्रतिक्षेपः। तथाहि— शब्दे स एवायमिति स्थायित्वोपलम्भादविनाशित्वम्, अदृष्टेश्वरादेश्चानुपलम्भादसत्त्वं केचित् प्रतिपन्नाः। तच्चायुक्तं, विशेषग्रहणाभावे खलूपलब्धिमात्रस्य चानुपलब्धिमात्रस्य च संशयहेतुत्वात्। प्रत्यभिज्ञानं तु प्रदीपादिष्विव। अनुपलब्धिश्च भूतलान्तर्गतजलादाविवान्यथाप्युपपन्नत्वान्न निर्णयकारणमिति ॥

सम्यग्ग्रहणेन चेत् संशयविपर्यययोरपोहः, तर्ह्यूहानध्यवसाययोः केन पदेनापोह इत्याशङ्क्याह —

**अनवधारणत्वाविशेषादूहानध्यवसाययोर्न संशयादर्थान्तरभाव इति ॥**

१. 'र्मत्वान्न' क. पाठः. २. 'पद्यमानत्वा' ङ. च. पाठः.

अनिश्चयात्मकत्वमेवानयोराह —

तद्यथा बाह्यालिप्रदेशे पुरुषेणानेन भवितव्यमित्यूहः । किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसाय इति ॥

प्रायेण पुरुषेणानेन भवितव्यमित्यनिश्चयरूप एवोहः, न पुनः पुरुष एवेति निश्चयरूपः । अनध्यवसायोऽपि का संज्ञा अस्य, असौ किंसंज्ञक इत्यनिश्चयात्मक एवोपपद्यते । तस्मादनयोः संशयात्मकत्वात् सम्यग्ग्रहणेनैव व्यवच्छेद इत्यर्थः । ममात्र संशयोऽस्तीत्यशेषपुरुषहृदयसाक्षितया संवेद्यमानस्य संशयस्य निराकरणं परेषामज्ञत्वमेव प्रकटयतीति ॥

सप्रपञ्चं संशयमभिधाय विपर्ययमाह—

मिथ्याध्यवसायो विपर्ययः ॥

इति । अध्यवसायः समीचीनोऽप्यस्तीति तद्व्यवच्छेदाय मिथ्याग्रहणम् । मिथ्यात्वं चातस्मिंस्तदितिज्ञानस्वरूपत्वम् । तत् संशयेऽप्यस्तीति तन्निरासायाध्यवसायग्रहणम् ॥

उदाहरणमाह —

तद्यथा द्वौ चन्द्रमसाविति सुप्तस्य गजादिदर्शनं चेति ॥

इति । सकलविपर्ययप्रभेदावरोधार्थमुदाहरणद्वयमुक्तं परपक्षप्रतिक्षेपार्थं च । वैशेषिकाः खलु संशयविपर्ययप्रमितिस्मरणेभ्यो विलक्षणं स्वप्नज्ञानं मन्यन्ते । तदयुक्तम् । सुप्तस्याविद्यमाना असन्निहिता वा गजादयो विद्यमानत्वेन सन्निहितत्वेन च गृह्यन्त इति तद्विषयं ज्ञानं विपर्यय एव । यस्तु गजो

वा महिषो वा इति प्रत्ययः स संशयः। स्वप्ने वधूबन्धुदर्शनजनितसुखानुभवस्तु प्रमा। सुप्तस्यैवातीतस्वप्नानुसन्धानं स्मरणम्। अतो न प्रत्ययान्तरं पश्यामः। धिगेतत्, शुक्तिकाशकलमेव मया रजतमिति गृहीतमिति प्रत्ययो विपर्ययसद्भावे प्रमाणम्। अनुमानं च। तथाहि—विवादपदं शुक्तिकाशकलं रजतज्ञानस्य विषयः, रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वात्, सम्यग्रजतवत्॥

प्रमाणलक्षणान्तर्गतानुभवपदव्यावर्त्यमाह[1]—

**स्मरणज्ञानव्यवच्छेदार्थमनुभवग्रहणम्॥**

इति। सम्यक्साधनं प्रमाणमित्युक्ते स्वर्गादेरज्ञानस्वरूपस्य साधनं यागाद्यपि प्रमाणं स्यात्। तथापि सम्यग्ज्ञानसाधनं प्रमाणमिति सिद्धेऽक्षराधिकस्यानुभवशब्दस्य[2] ग्रहणं स्मरणस्यापि व्यवच्छेदार्थमित्यर्थः। स्मरणविलक्षणं हि ज्ञानमनुभवः॥

साधनग्रहणापोह्यमाह—

**प्रमातृप्रमेयव्यवच्छेदार्थं फलाद् भेदज्ञापनार्थं च साधनग्रहणम्॥**

इति। सम्यगनुभवः प्रमाणमित्युक्ते फलभूतस्यानुभवस्य प्रमाणत्वप्रसङ्गः। तथापि सम्यगनुभवहेतुरिति सिद्धे साधनमिति गुरुकरणं प्रमातृप्रमेयव्यवच्छेदार्थम्। साध्यते येन तत् साधनमिति करणव्युत्पत्तेरिह विवक्षितत्वात्, कर्मकर्तृविलक्षणस्य क्रियाहेतोः करणत्वाच्च॥

१. 'पग्रहणव्यावर्त्यं दर्शयति स्म', २. 'स्योपादानं स्म' ग. ङ. पाठः.

साधनग्रहणव्यवच्छेद्यत्वेन प्रस्तुतयोः प्रमातृप्रमेययोर्लक्षणं तल्लक्षणभूतायाः प्रमाया लक्षणाभिधानद्वारेणाह —

**सम्यगनुभवः प्रमा । प्रमाश्रयः प्रमाता । प्रमाविषयः प्रमेयमिति ॥**

इति । प्रमाया आश्रयः प्रमाश्रयः । प्रमोत्पत्तौ समवायिकारणम् । प्रमाया विषय आलम्बनम् । प्रतिभासमानोऽर्थ इति यावत् । इतिशब्दः प्रमाणसामान्यलक्षणपरिसमाप्तिसूचकः ॥

भेदमाह —

**त्रिविधं प्रमाणम् ॥**

इति । तिस्रो विधाः प्रकारा यस्य तत् त्रिविधम् ॥

प्रकारानाह —

**प्रत्यक्षमनुमानमागमश्चेति ॥**

इति । इतिशब्दः प्रकारार्थः । अनेन प्रकारेण त्रिविधम् । अन्यथा तु सप्तविधत्वादिकमपि सम्भवत्येव । तथाहि — निर्विकल्पकसविकल्पकभेदेन योग्ययोगिप्रत्यक्षभेदेन वा द्विविधं प्रत्यक्षम् । कार्यकारणानुभयात्मकभेदेन त्रिविधमनुमानम् । दृष्टादृष्टविषयत्वेन द्विविध आगम इति सप्तप्रकारम् । अवान्तरभेदविवक्षायां तु विधान्तरमपि सम्भववत्येव ॥

इतरप्रमाणमूलत्वेन ज्येष्ठत्वात्[2] प्रथमोद्दिष्टस्य प्रत्यक्षस्य लक्षणमाह —

**तत्र सम्यगपरोक्षानुभवसाधनं प्रत्यक्षम् ॥**

---

१. 'मिति । इ' क. च. पाठः. २. 'श्रे' च. पाठः.

इति । अत्रापि सम्यगनुभवादिशब्दानां व्यवच्छेद्यं पूर्ववत् । अपरोक्षग्रहणेनानुमानादेर्व्यवच्छेदः । अपरोक्षत्वं हि ज्ञानावान्तरजातिः । अनुमानादिकं तु परोक्षत्वजातिमतोऽनुभवस्य साधनम् । अतोऽस्य निरासः ॥

तद्भेदमाह —

**तद् द्विविधं योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति ॥**

इति । चकारो[1] निर्विकल्पकसविकल्पकभेदेनापि वक्ष्यमाणं द्वैविध्यं समुच्चिनोति ॥

विशिष्टत्वेन प्रथमोद्दिष्टस्यापि योगिप्रत्यक्षस्यास्मदादिप्रत्यक्षदृष्टान्तबलेन बेद्यत्वादादौ तदेव लक्षयति —

**तत्रायोगिप्रत्यक्षं प्रकाशदेशकालधर्माद्यनुग्रहादिन्द्रियार्थसम्बन्धविशेषेण स्थूलार्थग्राहकम् ॥**

इति । प्रकाश आलोकः, मनस्समाधिश्च । देशः समीपपुरोवर्त्यादिः । कालो वर्तमानः । धर्म इष्टज्ञाने । आदिशब्दादनिष्टोपलब्धावधर्मः । ईश्वरोऽपि सर्वकार्ये निमित्तत्वात् स्वीक्रियते । तथा रसादिज्ञाने दन्तान्तर्गतेजला[2]दिः । तेषामनुग्रहः साहाय्यं, तस्मात् । इन्द्रियाणि चक्षुरादीनि । अर्थाः पृथिव्यादयो रूपादयश्च । तेषां मिथः सम्बन्धविशेषः संयोगसंयुक्तसमवायादिः । तेनासाधारणकारणेन सह । स्थूल इव स्थूलः । स्थूलश्चासावर्थश्चास्मदादिप्रत्यक्षयोग्यः । तस्य ग्राहकं ग्रहणकरणभूतं यत् तदयोगिप्रत्यक्षम् । करणस्यापि कर्तृत्वोपचारात् ण्वुल्प्रत्ययः । न चेदृशं योगिप्रत्यक्षमिति ततोऽस्य भेदः । न च[3] स्थूलस्यैव

---

१. 'राद् नि', २. 'तोदकादिः' ग. पाठः. ३. 'तु' ङ. पाठः.

ग्राहकमिति व्याख्येयम् । अस्थूलस्यापि रूपादेर्ग्रहणात् । इन्द्रियार्थसंबन्धे च प्रमाणमनुमानं — चक्षुःश्रोत्रे प्राप्तमेव प्रकाशयतः, बाह्येन्द्रियत्वात्, त्वगिन्द्रियवत् । प्रकाशकत्वे सति व्यवहिताप्रकाशकत्वाद् वा, प्रदीपादिवत् ॥

प्रत्यक्षप्रमाणस्य प्रायेणातीन्द्रियत्वात् तत्फलमेव सम्बन्धविशेषोपदर्शनद्वारेणोदाहरति —

**तद्यथा — चक्षुःस्पर्शनसंयोगाद् घटादिद्रव्यज्ञानम् ॥**

इति । चक्षुषा स्पर्शनेन्द्रियेण वा संयोगाद् घटादिद्रव्यस्य ज्ञानम् । उत्पद्यते इति शेषः ॥

संबन्धान्तरात् प्रत्यक्षज्ञानं दर्शयति —

**संयुक्तसमवायात् ताभ्यां घटत्वसङ्ख्यापरिमाणादिज्ञानम् ॥**

इति । ताभ्यां चक्षुःस्पर्शनाभ्याम् । संयुक्ते द्रव्ये समवायः संयुक्तसमवायः । तस्मात् सम्बन्धात् । आदिशब्दस्य प्रत्येकमभिसम्बन्धाद् घटत्वसत्त्वपृथिवीत्वादीनि सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वकर्माणि च द्वि[1]द्वीन्द्रियग्राह्याणि संगृह्यन्ते । हस्तचलनं प्रत्यक्षं, प्रत्यक्षाश्रितत्वे सति संयोगासमवायिकारणत्वात् संयोगवत् । कर्मत्वं वा प्रत्यक्षाश्रयाश्रितं, संयोगासमवायिकारणाश्रितत्वात् संयोगत्ववत् । नचाश्रयासिद्धं साधनं, जातिरूपस्य कर्मत्वस्य परै[2]रनभ्युप-

१. 'न्धः घ', २. 'रैरन' ग. पाठः.

गमेऽपि उपाधिरूपस्याभ्युपगमात् । तथा संयोगत्वस्याप्युपाधिरूपस्य सिद्धत्वान्नाश्रयहीनमुदाहरणम् ॥

एतस्मादेव सम्बन्धादेकैकेन्द्रियग्राह्येषु ज्ञानान्याह —

**चक्षुषैव रूपज्ञानं, स्पर्शनेनैव स्पर्शज्ञानं, घ्राणेनैव गन्धज्ञानं, रसनेनैव रसज्ञानं, मनसैव सुखादिज्ञानमिति ॥**

सर्वत्र संयुक्तसमवायादित्यनुवर्तते । चक्षुषैवेत्यादावेवकारो बाह्येन्द्रियान्तरनिषेधार्थं, रूपादिज्ञाने मनसोऽपि हेतुत्वात् । मनसैवेत्यत्रैवकारो बाह्येन्द्रियाणां प्रतिषेधपरः, न पुनरदृष्टादेः । इतिशब्दः संयुक्तसमवायपरिसमाप्तौ ॥

अधुना सम्बन्धान्तराद् ज्ञानोत्पत्तिमाह —

**एतेषु सङ्ख्यादिष्वाश्रितानां सामान्यानां स्वाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवेतसमवायाद् ग्रहणम् ॥**

इति । सङ्ख्यादिग्रहणं घटत्वादिनिरासार्थं, सामान्ये सामान्याभावात् । सामान्यानामिति सत्त्वसङ्ख्यात्वपरिमाणत्वादीनां ग्रहणम् । स्वाश्रयग्राहकैरिन्द्रियैरिति । तत्र सङ्ख्यात्वादिकर्मत्वान्तानां चक्षुःस्पर्शनाभ्यां ग्रहणम् । 'सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वकर्माणि' इति सूत्रम् । रूपत्वादीनां त्वेकैकेन्द्रियेण । सत्तासामान्यस्य तु षडिन्द्रियग्राह्येष्वपि विशेषणत्वेन ग्रहणात् सर्वेन्द्रियेण ज्ञानम् । इन्द्रियेण संयुक्ते द्रव्ये समवेता ये सङ्ख्यादयः तेषु समवायो यः सामान्यानां तस्माद् ग्रहणम् । भवतीति शेषः ॥

---

१. 'र्थः ।' ग. पाठः.

पुनः सम्बन्धद्वयाद् ज्ञानोत्पादं दर्शयति —

**श्रोत्रसमवायाच्छब्दग्रहणम् । तदाश्रितसामान्यज्ञानं समवेतसमवायात् ॥**

इति । शब्दो गुणः सामान्यवत्त्वास्पर्शवत्त्वे सति[1] अस्मदादिबाह्यैकेन्द्रियग्राह्यत्वात, सामान्यवत्त्वेकर्मव्यतिरिक्तत्वे सति सामान्यवतामनाधारत्वाद् वा, रूपादिवत् । इति गुणत्वे सिद्धे गुणत्वाच्चाश्रयवत्त्वे सति य आश्रयः स पारिशेष्याद्वाकाशः । तथाहि — शब्दः स्पर्शवतां गुणो न भवति, घ्राणरसनचक्षुस्त्वगिन्द्रियैरग्राह्यत्वे सति अस्मदादिप्रत्यक्षत्वात् सुखादिवत् । शब्द आत्ममनसोर्गुणो न भवति, अस्मदादिबाह्येन्द्रियप्रत्यक्षत्वाद् रूपादिवत् । भूतात्ममनोतिरिक्तदिक्कालसद्भावेऽपि शब्दो दिक्कालगुणो न भवति, विशेषगुणत्वाद् रूपादिवत् । अतः पारिशेष्याद् यः शब्दाश्रयः स आकाशः । स एव श्रोत्रम् । तथाहि — शब्दो गुणत्वावान्तरजात्या स्वसमानजातीयगुणवतेन्द्रियेण गृह्यते, बाह्येन्द्रियग्राह्यविशेषगुणत्वाद् रूपादिवत् । श्रोत्रं वा स्वग्राह्यगुणेनात्यन्तसजातीयगुणवत्, बाह्येन्द्रियत्वात् चक्षुरादिवत् । अतः श्रोत्रस्याकाशात्मकत्वात् तद्गुणस्य शब्दस्य तेन सह समवायः सम्बन्ध इति स्थितम् । नचाकाशात्मकश्रोत्रसंयुक्त एवाकाशान्तरे समवायाच्छब्दस्य ग्रहणमिति युक्तम् । नभोभेदे प्रमाणाभावात् । तीव्रादिभेदभिन्नास्तु शब्दास्तीव्रादिभेदभिन्नाघातान्वयव्यतिरेकानुविधायित्वान्नाश्रयभेदसाधकाः । अभेदे तु विवादाध्यासिताः शब्दाः श्रूयमाणशब्देनैकाश्रयाः, शब्द-

---

१. 'ति बा', २. 'त्त्वे स' ख. च. पाठः.

त्वात् श्रूयमाणशब्दस्यासमवायिकारणशब्दवत्। असमवायि-कारणशब्दः स्वकार्येणैकाश्रयः, अस्पर्शद्रव्यविशेषगुणस्यासमवायिकारणत्वात्, आत्मान्तःकरणसंयोगवदित्यलम्। तदाश्रितेति। तं शब्दमाश्रितानि तदाश्रितानि। (तदाश्रितानि) च सामान्यानि च तदाश्रितसामान्यानि सत्त्वशब्दत्ववर्णत्वादीनि। तेषां ज्ञानम्॥

षष्ठसम्बन्धाद् ज्ञानोत्पादमाह —

**एतत्पञ्चविधसम्बन्धसम्बन्धिविशेषणविशेष्यभावाद् दृश्याभावसमवाययोर्ग्रहणम्॥**

इति। एते च ते पञ्चविधसम्बन्धाश्च एतत्पञ्चविधसम्बन्धाः। संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवाय इति। एतैः सम्बन्धैः सम्बद्धेषु पदार्थेषु विशेषणविशेष्यभावो नाम यः सम्बन्धः तस्मात्। अत्र सम्बन्धविशेष एवेतरसम्बन्धवैलक्षण्येन ज्ञापनार्थं विशेषणविशेष्यभावशब्देनोक्तः। न पुनर्विशेषणविशेष्यभाव एव सम्बन्धः। विशेषणविशेष्यभावयोः प्रतिनियताश्रयवृत्तित्वेन द्विष्ठसम्बन्धरूपत्वानुपपत्तेः। तत्सत्त्वे किं प्रमाणमिति चेद्, घटशून्यं भूतलमिति ज्ञानं विशेषणविशेष्यभावसम्बन्धनिबन्धनं, विशिष्टप्रत्यक्षप्रत्ययत्वाद् दण्डीत्यादिप्रत्ययवत्॥

ग्रहणप्रकारमाह —

**तद्यथा — घटशून्यं भूतलम्, इह भूतले घटो नास्ति॥**

१. 'यी श' ग. पाठः. २. 'ण्यज्ञा' क. ङ. पाठः. ३. 'त्यादि ज्ञा' ग. पाठः. ४. 'णस्वरूपमा' ङ. च. पाठः.

इति । इदमितीन्द्रियसंयुक्ते भूतले विशेषणतया विशेष्यतया वाभावस्य ग्रहणं दर्शितम् ॥

**एवं सर्वत्रोदाहरणीयम् ॥**

इति । इन्द्रियसंयुक्तसमवेतादौ विशेषणविशेष्यभावसम्बन्धेनाभावस्य ज्ञानमुदाहरणीयमित्यर्थः । तथाहि — अशुक्लं कृष्णरूपं, कृष्णरूपे शुक्लत्वं नास्तीति संयुक्तसमवेते कृष्णरूपे शुक्लत्वाभावस्य ज्ञानम् । अभिन्नं शुक्लत्वसामान्यं, शुक्लत्वसामान्ये भेदो नास्तीति संयुक्तसमवेतसमवेते शुक्लत्वसामान्ये विशेषणविशेष्यभावेन भेदकधर्माभावस्य ज्ञानम् । अकारः ककारो न भवति, अकारे ककारत्वं नास्तीति श्रोत्रसमवेताकारे विशेषणविशेष्यभावसम्बन्धेन कत्वाभावस्य ज्ञानम् । अभिन्नमत्वम्, अत्वे भेदो नास्तीति श्रोत्रसमवेतसमवेते अत्वसामान्ये भेदकधर्माभावस्य ज्ञानमिति । दृश्यस्य द्रष्टुं योग्यस्य घटादेरभावो यस्तस्य प्रत्यक्षत्वं, न पुनः पिशाचाद्यभावस्येत्यर्थः ॥

नन्वेवं सत्यभाववत् समवायेऽपि विशिष्टव्यवहारदर्शनात् समवायिभिः सह सम्बन्धान्तरं स्यात्, ततस्तस्यापि सम्बन्धान्तरमित्यनवस्थाप्रसङ्ग इत्याशङ्क्याह —

**समवायस्य तु क्वचिदेव ग्रहणम् । यथा — घटे रूपसमवायः, रूपसमवायवान् घटः इति ॥**

क्वचिदेव शास्त्राभ्यासाविपर्यासितबुद्धौ, समवायस्य विशेषणतया विशेष्यतया वा विषयत्वं, न पुनरभाववल्लौकिकबुद्धावपीत्यर्थः । नच प्राक्तनहेतोः रूपसमवायी घट इति

विशिष्टप्रत्ययेन व्यभिचारः। प्रत्यक्षात्मकविशिष्टप्रत्ययत्वस्य हेतुत्वेनोपादानात्। नचायं प्रत्यक्षरूपः प्रत्यय इति। कथं तर्हि समवायस्य प्रत्यक्षत्वमिति चेद्, न। अनुमितानिर्विकल्पकविषयत्वात्। तथाहि—शुक्लः पट इत्यादिप्रत्यक्षप्रत्ययः प्रत्यक्षेण ज्ञायमानसम्बन्धपूर्वकः, प्रत्यक्षात्मकविशिष्टप्रत्ययत्वाद् दण्डीति प्रत्ययवत्। अन्ये पुनरिमं ग्रन्थमन्यथा योजयन्ति। समवायस्य तु क्वचिदेव संयुक्ते संयुक्तसमवेते समवेते च विशेषणविशेष्यभावेन ग्रहणं, नत्वभाववत् पञ्चविधे सम्बन्ध इति। तदयुक्तम्। क्वचिदपि समवायस्य विशेषणतया विशेष्यतया वाभाववत् प्रत्यक्षप्रतीत्यभावात्। तथात्वाभ्युपगमे हि समवायस्यापि सम्बन्धान्तरप्रसङ्गः। तच्चानिष्टम्। विशेषणविशेष्यभावाद् दृश्याभावसमवाययोर्ग्रहणमिति ग्रन्थस्तर्हि कथमिति चेत्। उपचाराद् भेदव्यवहारः। तथाहि—रूपरूपिणोर्विशेषणविशेष्यभूतयोर्विशिष्टप्रत्ययहेतुत्वात् तत्समवायो विशेषणविशेष्यभाव इत्युच्यते। स्वविषयालोचनाहेतुश्च स एवेति भेद उपचरितः। किमुक्तं भवति। विशेषणविशेष्यभावसम्बन्धरूपत्वात् समवायो निर्विकल्पकेन गृह्यत इत्यर्थः। नच यन्निर्विकल्पकग्राह्यं तत् सविकल्पकेनापि गृह्यत इति व्याप्तिरस्ति, पथि गच्छता गृह्यमाणतृणादिभिर्व्यभिचारादिति॥

योगिप्रत्यक्षं दर्शयति—

योगिप्रत्यक्षं तु देशकालस्वभावविप्रकृष्टार्थग्राहकम्॥

१. 'क्षरूपत्व', २. 'प्रतीयमा', ३. 'वा प्र' क. पाठः.

इति । देशेन विप्रकृष्टा दूरस्था मेर्वादयः नागभवनादयश्च । कालविप्रकृष्टा रामादयः । स्वभावविप्रकृष्टाः परमाण्वदृष्टादयः । तेषां ग्राहकं तद्विषयसाक्षात्कारिसम्यगनुभवसाधनं यत् तद् योगिप्रत्यक्षम्। तद् द्विविधं युक्तावस्थायां वियुक्तावस्थायां चेति वाक्यमध्याहार्यम् ॥

अवस्थाद्वयेऽपि योगिप्रत्यक्षस्य फलोत्पत्तिप्रकारमाह —

**तत्र युक्तावस्थायामात्मान्तःकरणसंयोगादेव धर्मादिसहितादशेषार्थग्रहणम् ॥**

इति । युक्तावस्थायां सकलबाह्यकरणव्यापारविरमे केवलमनोविलोक्यमानत्वावस्थायाम्। आत्मान्तःकरणसंयोगादेवेत्येवकारेण बाह्येन्द्रियसन्निकर्षं[1] मनसोऽर्थसन्निकर्षं[2] च निरस्यति, न पुनः कारणान्तरं, धर्मादिसहितादित्यभिधानात्। धर्मश्चात्र योगाभ्यासप्रसादसमासादितो विशिष्टो निर्दिष्टः । आदिशब्दादीश्वरः । अशेषार्थग्रहणमित्युपलक्षणं, कतिपयातीन्द्रियार्थग्रहणस्यापि योगिप्रत्यक्षरूपत्वात् ॥

**वियुक्तावस्थायां तु चतुष्टयत्रयद्वयसन्निकर्षाद्[3] ग्रहणम् ॥**

इति। वियुक्तावस्थायाम् असमाध्यवस्थायाम्। तुशब्दः प्राक्तनज्ञानादस्य करणाधिक्यलक्षणातिशयसूचने । सन्निकर्षशब्देनात्र संयोगो विवक्षितः। तत्र घ्राणरसनचक्षुस्त्वगिन्द्रियैरर्थग्रहणे चतुर्णामात्मान्तःकरणबाह्येन्द्रियगन्धाद्याश्रयाणां संयोगः कारणम् । यदा शब्दग्रहणं तदात्ममनश्श्रोत्राणां त्रयाणां संयोगः । यदा चान्तरधर्मादीनां ग्रहणं तदात्ममनसोर्द्वयोः संयोगः कारणमिति ॥

---

१. 'ष्वाद', २. 'यसंयोगं म', ३. 'संयोगं च' ग. पाठः.

एतदेवाह —

**यथासम्भवं योजनीयम् ॥**

इति । यद्यप्यस्मदादिचाक्षुषज्ञाने प्रकाशस्यापि पञ्चमस्य संयोगः कारणं, तथापि योगिनां तदपेक्षाभावान्नाभिहितम् ॥

आर्षं नाम प्रमाणान्तरं केचिदाहुः । तथा चोक्तं — 'प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा विद्ये'ति । तन्निरस्यति —

**अत्रैवार्षमन्तर्भूतं प्रकृष्टधर्मजत्वाविशेषादिति ॥**

इति । आर्षप्रमाणफलभूतस्य ज्ञानस्येति शेषः । अस्मदाद्यतीन्द्रियार्थविषयसाक्षात्कारिप्रमा हि विशिष्टादृष्टजनिता योगिप्रत्यक्षफलमुच्यते । आर्षज्ञानमप्यतीन्द्रियेऽर्थे विशिष्टधर्मजनितम् । धर्मस्तु समाधिजनितो वास्तु, तपोविशेषजनितो वा । नैतावता प्रमाणभेदः । नन्वस्मदादिष्वपि क्वचिदार्षज्ञानं दृश्यते । तथाच कन्यका ब्रवीति — श्वो मे ज्यायानागन्ता, हृदयं मे कथयतीति । तद्वचनानुमितस्य भाविभ्रात्रागमनालम्बनज्ञानस्य संवादेन प्रामाण्यमप्यस्तीति । नैतदेवम् । काकरुतादिवत् कन्यावचनस्य शाकुनत्वेन लिङ्गत्वात् । अतो न कन्यकाया अतीन्द्रियार्थज्ञानसद्भावे प्रमाणमस्तीति । योगिप्रत्यक्षे चानेकागमवचनानि प्रमाणम् । अनुमानं च — अस्मदादिप्रत्यक्षज्ञानं सर्वविषयेणातीन्द्रियार्थविषयेण वा[1] केनचिज् ज्ञानेनात्यन्तसजातीयं[2], प्रमात्वात्[3] ।

१. 'वा एकेन ज्ञा', २. 'समानजा', ३. 'माणत्वा' ग. पाठः.

शब्दज्ञानवत् । नच सर्वविषयेण ज्ञानेनात्यन्तसजातीयत्वे साध्ये लैङ्गिकज्ञानेन व्यभिचारः । तस्यापि शाब्देन सर्वविषयेणैकेनापि ज्ञानेन परोक्षत्वजात्यात्यन्तसजातीयत्वात् । न च तेनैव प्रकृतस्याप्यत्यन्तसजातीयत्वमस्तीति वाच्यम् । प्रकृतज्ञानस्य साक्षात्कारित्वेन विजातीयत्वात् ॥

प्रत्यक्षमात्रस्य पुनरपि द्वैविध्यमाह —

**तच्च द्विविधं सविकल्पकं निर्विकल्पकं च ॥**

इति । तच्छब्देन योगिप्रत्यक्षं परामृश्यते । चकारेणायोगिप्रत्यक्षम् । द्वितीयस्तु चकार उक्तसमुच्चये ॥

लक्षणमाह —

**तत्र संज्ञादिसम्बन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकम् ॥**

इति । संज्ञादीत्यादिशब्दाद् द्रव्यगुणकर्मसामान्याभावाः स्वीकृताः । संज्ञादीनां यः सम्बन्धः स संज्ञादिसम्बन्धः । तस्योल्लेखस्तद्विषयं ज्ञानम् । तेन सहकारिणा सह विशिष्टज्ञानोत्पत्तौ निमित्तं करणं यत् तत् सविकल्पकं प्रमाणम् । आवृत्त्यान्योऽप्यर्थः — 'संज्ञादिसम्बन्धस्योल्लेखः प्रतिभासः विषयत्वम् । तेन सहिता या ज्ञानोत्पत्तिः तस्या निमित्तं करणं सविकल्पकमिति व्याख्येयम् । विशेषणस्य संज्ञादण्डादेः पूर्वं ज्ञाने सति तत्सहकारिणेन्द्रियेण विशेषणविशेष्यविषयस्यैकस्य विशिष्टज्ञानस्योत्पत्तेः । अत एवाग्निमान् पर्वत इत्यादिज्ञानमनुमानफलं, व्याप्तिस्मरणकाले प्रतीतेना-

१. 'यविशिष्टज्ञानोत्प' ग. च. पाठः.

भिना विशिष्टस्यानुमेयत्वात्[1] । अन्यथा निराधारस्याग्नेः कथमनुमेयत्वमिति ॥

प्रमाणस्यातीन्द्रियत्वात् तत्फलमेवोदाहरति —

यथा देवदत्तोऽयं दण्डीत्यादि ॥

इति । तत्र देवदत्त इति संज्ञासम्बन्धोल्लेखि ज्ञानम् । दण्डीति द्रव्यसम्बन्धोल्लेखि ज्ञानम् । आदिशब्देन शुक्लः पट इत्यादि गुणोल्लेखि ज्ञानम् । गच्छति नर इति क्रियोल्लेखि । गौरश्च इत्यादि सामान्यसम्बन्धोल्लेखि । घटरहितं[2] गृहमित्यभावोल्लेखि । अत्र विशेषणविशेष्ययोर्बाह्यैकेन्द्रियग्राह्ययोर्विशिष्टज्ञानं बाह्येन्द्रियजम् । यथा दण्डी शुक्लः पट इत्यादि । भिन्नेन्द्रियग्राह्ययोस्तु विशिष्टज्ञानं मानसमेव । यथा देवदत्तोऽयं, सुरभि कुसुममित्यादि । अन्ये तु सर्वस्यापि सविकल्पकज्ञानस्य संज्ञादिसम्बन्धोल्लेखेनोत्पद्यमानत्वात् संज्ञायाश्च विशेषणत्वेन विशिष्टप्रत्ययालम्बनत्वात् तद्विषये चक्षुरादीनां व्यापारासम्भवान्मनसो व्यापार इति मानसमेव सविकल्पकमित्याचक्षते । संज्ञादेश्च विशेषणत्वं व्यावर्तकत्वादिति । यथा तेषु पुरुषेषु दण्डिनमाह्वयेति दण्डेन पुरुषः पुरुषान्तराद् व्यावर्त्यते, तथा तेषु पुरुषेषु देवदत्तमाह्वयेति संज्ञयापि ॥

वस्तुस्वरूपमात्रावभासकं निर्विकल्पकम् ॥

इति । मात्रग्रहणेन संज्ञादिसम्बन्धनिरासः । अवभासकमिति तद्विषयावभासकरणमित्यर्थः ॥

१. 'स्य पर्वतस्यानु' ङ. पाठः.　　२. 'तं भूतलमि' ग. च. पाठः.

अत्रापि प्रमाणस्यातीन्द्रियत्वात् तत्फलमेवाह—

**यथा प्रथमाक्षसन्निपातजं ज्ञानं युक्तावस्थायां योगि[1]ज्ञानं चेति ॥**

इति । प्रथमाक्षसम्बन्धवेलायां संज्ञादिसम्बन्धस्मरणाभावात् तदनन्तरमुत्पद्यमानं ज्ञानं निर्विकल्पकमेवोत्पद्यते । उत्पन्ने तु तस्मिन् सङ्केत[2]ग्रहणकाले साहचर्येणानुभूतशब्दार्थयोर्मध्येऽन्यतरस्यार्थस्य दृष्टत्वात् तत्संस्कारोद्बोधे संज्ञादिस्मरणस्योत्पादे च पश्चात् सविकल्पकज्ञानं युक्तमेव । अत एव निर्विकल्पकमभ्युपगन्तव्यम् । तदभावे हि संज्ञादिस्मरणाभावेन सविकल्पकाभावप्रसङ्गः । तदभावे चानुमानादेरनुत्थानमिति । युक्तावस्थायां समाध्यवस्थायाम् । योगिज्ञानं च निर्विकल्पकम् । तस्यां दशायां पदार्थस्वरूपमात्रावलोकनात् । इतिशब्दः प्रत्यक्षलक्षणपरिसमाप्तौ ॥

इति श्रीमत्काश्मीरसूर्य[3]सूरीन्द्रसूनुवासुदेवसूरिविरचितायां न्यायसार[4]पदपञ्चिकायां प्रत्यक्षपरिच्छेदः ॥

---

## अथानुमानपरिच्छेदः ।

सकलप्रमाणज्येष्ठं प्रत्यक्षं लक्षयित्वेदानीमनुमानं प्रपञ्चयति—

**सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानम् ॥**

इति । सम्यगिति भिन्नं पदं साधनविशेषणम् । इहाविनाभावविषयं स्मरणमविनाभावः, उपचारात् । साधकतमार्थे तृतीया । अविनाभावविषयस्मरणेनासाधारणकारणेन जनितस्य परोक्षानुभवस्य यत् सम्यक्साधनं लिङ्गज्ञानादिकं,

---

१. 'गिप्रत्यक्षज्ञा' ग. च. पाठः. २. 'तका' ग. पाठः. ३. 'र्यसूनु' ग. च. पाठः. ४. 'रलघुप' ग. पाठः.

तत् सर्वमनुमानमित्यर्थः । सम्यगित्यादिविशेषणानां तु प्रयोजनं पूर्ववत् । परोक्षग्रहणं तु प्रत्यक्षव्यवच्छेदार्थम् । शब्दोऽपि परोक्षानुभवसाधनमिति तेनातिप्रसङ्गः । तद्व्यवच्छेदार्थमविनाभावेनेति पदम् । शब्दस्य समयबलेनार्थप्रतीतिहेतुत्वात् । ननु तथाप्यविनाभावग्रहणेन प्रत्यक्षस्यापि व्यवच्छिन्नत्वाद् व्यर्थं परोक्षग्रहणमिति चेत् । सत्यम् । परोक्षत्वापरोक्षत्वजाती बाह्येन्द्रियविषयाश्रिते इति केषाञ्चिद् दर्शनम् । तन्निरासार्थमनुमान[3]फलस्वरूपकथनार्थं चानुभवविशेषणत्वेनोक्तमिति केचित् । वयं तु ब्रूमः—वह्निधूमयोः सहचरितयोर्ग्रहणे सति दहनाविनाभूतो धूम इति ज्ञानमपरोक्षरूपं मानसं जायते । ततस्तत्साधनमप्यविनाभावेनानुभवसाधनम् । नचानुमानमिति तद्व्युदासाय परोक्षग्रहणमिति ॥

केनाप्यर्थेनाविनाभावः कस्यापि तात्त्विको नास्ति । अतोऽनुमानलक्षणमसम्भवीति[4] शङ्का । तां निरस्यति —

**स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभावः ॥**

इति । प्रत्यक्षेण प्रतीयमानो निराकर्तुं न शक्यत इति शेषः । तथाहि—बालादयोऽपि धूमं दृष्ट्वा वह्निं प्रतिपद्य तदर्थं प्रवर्तमाना दृश्यन्ते । नचान्यदर्शनेनान्यस्य प्रतीतिः । दहनं विना धूमो नोपपद्यते इत्येवंविधाविनाभावग्रहणमन्तरेण न सम्भवतीति साध्येन साधनस्य व्याप्तिरिति । यदिदं साध्यस्य वह्न्यादेर्व्यापकत्वं, साधनस्य धूमादेर्व्याप्यत्वं, यत्र यत्र धूमस्तत्र तत्राग्निः, अग्न्यभावे तु न

---

१. 'त् वाच्यम् । प' ग. ङ. पाठः. २. 'प्रतिपत्तिहे', ३. 'नस्व' ङ. पाठः. ४. 'ति मतं नि' ङ. च. पाठः.

क्वचिद् धूमो दृष्ट इति, सोऽविनाभाव इत्यर्थः। तथापि शब्द-नित्यत्वे साध्ये पक्षसपक्षयोरन्यतरत्वादीनां कल्पिता व्याप्तिरस्ति । नचासाववविनाभाव इति तद्व्युदासार्थमाह—स्वभावत इति । अकल्पनयेत्यर्थः । अत्र पक्षसपक्षयोरन्यतरत्वादीनां तु न शब्दनित्यत्वेन स्वाभाविकी व्याप्तिरस्ति, अनियतसाध्यत्वात्[1] । तथाहि—यथा नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वादाकाशादिवदिति प्रयोगः, तद्वदनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वाद् घटवदित्यपि सम्भवत्येव । न च स्वाभाविकाविनाभाववान् धूमो धूमध्वजमिव तदभावो-[2]ऽभावमपि साधयतीति दृष्टम् ॥

भेदमाह —

स द्विविधः अन्वयव्यतिरेकभेदात् ॥

इति । अन्ये पुनर्विना केनचित् कस्यचिदभावो ह्यविनाभाव इति शब्दार्थं पश्यन्तो व्यतिरेकरूप एवाविनाभाव इति मन्यन्ते । तदयुक्तम् । नहि व्युत्पत्तिरेव शब्दार्थं व्यवस्थापयति, अपितु लोकप्रसिद्धिरपि । सा चाविनाभावस्योभयरूपत्वेऽप्यस्ति । व्युत्पत्तिमात्रनिमित्तत्वे तिष्ठन् गौर्न स्याद्, गच्छतीति गौरिति व्युत्पत्तेः ॥

उभयरूपस्य लक्षणमाह —

साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः । साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकः ॥

---

१. 'त् । यथाहि नि' ग. पाठः. २. 'भावम' क. पाठः.

इति । साध्यमेवाविवक्षितावान्तरविशेषं सामान्यं साध्यसामान्यम् । तार्णत्वपार्णत्वमठमहानसस्थत्वादिविशेषविवक्षाशून्यमग्निमात्रमित्यर्थः । तेन कर्तृभूतेन । साधनमेवाविवक्षितावान्तरभेदं सामान्यं साधनसामान्यम् । तस्य कर्मभूतस्य व्याप्तिः साहचर्यं यत् सोऽन्वयः । यो यो विशिष्टो धूमः स स मूलप्रदेशो वह्निमान् । यो धूमवान् भूप्रदेशः स वह्निमानिति व्याप्तिः सोऽन्वयः । एतेन

"विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात् ।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः ॥"

इति दूषणं प्रत्युक्तम् । अवान्तरविशेषणान्वयस्यानभिधानात् । सामान्ये सिद्धसाधनादित्यपि निरस्तम् । नहि यत्र क्वचिदग्निरस्तीति साध्यते । कथं तर्हि । यत्र पर्वतादौ धूमोपलब्धिस्तत्र मूलप्रदेशे वह्निरिति प्रदेशस्यापि सामान्याकारेणाविनाभावग्रहणमुपदर्शितमेव । अथवा, द्वयमनुमानाङ्गं व्याप्तिः पक्षधर्मता चेति । तत्र व्याप्तिबलादग्निमात्रसिद्धिः । पक्षधर्मताबलाच्च नियतधर्मिसम्बन्धलक्षणविशेषसिद्धिरित्यलम् । तथा साधनमेव सामान्यं साधनसामान्यम् । तस्याभावेन । साध्यमेव सामान्यं साध्यसामान्यम् । तस्याभावः साध्यसामान्याभावः । तस्य व्याप्तिः साहचर्यं यत् स व्यतिरेकः । यत्र साध्यस्याग्न्यादेरभावः तत्र साधनस्य धूमादेरप्यभाव इति यः साध्याभावसाधनाभावयोर्व्याप्यव्यापकभावः स व्यतिरेक इत्यर्थः ॥

१. 'धनमित्य' ग. पाठः. २. 'किन्त' ङ. पाठः.

**साधनं लिङ्गम् ॥**

**इति पर्यायो न लक्षणम् ॥**

**तत् पुनर्द्विविधं दृष्टं सामान्यतोदृष्टं च ॥**

इति । भेदनिरूपणे चशब्दः । स्वार्थपरार्थभेदेन द्वैविध्यसूचने । तत्र दृष्टविषयत्वेन साधनमपि दृष्टमित्युच्यते । साध्यं तु[2] क्वचित् पूर्वं दृष्टमनुमीयते । यथा कुड्यादिव्यवहितः स्वपित्रादिर्ध्वनिलिङ्गेन । क्वचित् पूर्वमदृष्टोऽप्यनुमीयमानो दहनादिर्दृष्टसजातीयत्वाद् द्रष्टुं शक्यत्वाद् वा दृष्ट इत्युच्यते । अतस्तद्विषयमपि साधनं दृष्टमेव ॥

उभयरूपस्यापि साधनस्य लक्षणमाह —

**तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टम् । यथा धूमोऽग्नेरिति । स्वभावविप्रकृष्टार्थानुमापकं सामान्यतोदृष्टम् । यथा रूपादिज्ञानं चक्षुरादेरिति ॥**

प्रत्यक्षप्रमाणस्य योग्यः प्रत्यक्षयोग्यः । स चासावर्थश्च प्रत्यक्षयोग्यार्थः । तस्यानुमापकमिति करणस्यापि कर्तृत्वोपचारात् ण्वुल्प्रत्ययः । प्रत्यक्षयोग्यत्वं च पूर्वदृष्टत्वेन वास्मदादिभिर्द्रष्टुं शक्यत्वेन वा । स्वभावेन स्वरूपेण विप्रकृष्टा अर्था अस्मदादिप्रत्यक्षायोग्याः परमाण्वादयः । तेषामनुमापकं लिङ्गं सामान्यतोदृष्टमित्युच्यते, व्याप्तिग्रहणवेलायां सामान्यतो दृष्टस्यार्थस्य पश्चादनुमापकत्वात् । यद्यपि सर्वमनुमानं सामान्यतो गृहीतव्याप्तिकार्थविषयं, तथापि दहनाद्यनुमानं येन सामान्येन व्यपदिश्यते तस्य प्रत्यक्षत्वात् तद्विषयमनु-

---

१. 'यत्वात् सा' ग. पाठः. २. 'च', ३. 'नादि ये' ख. पाठः. ४. 'शति त' च. पाठः.

मानं दृष्टमित्युच्यते। नन्वेवं चक्षुराद्यनुमानं येन सामान्येन नयनत्वादिना व्यपदिश्यते न तस्य प्रत्यक्षत्वमिति। तथापि क्रिया करणपूर्विकेति सामान्यव्याप्तिबलात् प्रवर्तमानत्वात् सामान्यतोदृष्टमित्युच्यते इति ॥

**तत् पुनर्द्विविधम् ॥**

इति। अत्र स्वार्थं परार्थं चेत्येतावदध्याहार्यम् ॥

उभयस्यापि लक्षणमाह —

**परोपदेशानपेक्षं स्वार्थम्। परोपदेशापेक्षं परार्थमिति ॥**

पर उपदिश्यते येन पदसमूहेनासौ परोपदेशः ॥

तस्य स्वरूपमाह —

**परोपदेशस्तु पञ्चावयवं वाक्यम् ॥**

इति। तुशब्दो ऽवयवत्र्यवयवादिपरपक्षनिरासे ॥

पदकदम्बात्मकत्वाद् वाक्यस्य तदवयवाः पञ्च किं पदान्येव, नेत्याह —

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥**

इति। वाक्यात्मका अपि प्रतिज्ञादयः महावाक्यापेक्षया अवयवाः। यथावयविनोऽपि पादादयः कायापेक्षया अवयवा व्यवह्रियन्ते तद्वदेवेत्यर्थः ॥

आद्यावयवस्य लक्षणमाह —

**तत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञा। यथा अनित्यः शब्द इति ॥**

---

१. 'वा उच्यन्ते तथेत्य' ग. ङ. च. पाठः.

तत्र तेष्ववयवेषु मध्ये । 'साध्यधर्मविशिष्टो धर्मी पक्ष' इति वक्ष्यति । तस्य पक्षस्य वचनं हेत्वाद्यवयवशून्यमनित्यः शब्द इति । केवलपक्षवचनं प्रतिज्ञा मा भूदित्येतदर्थमुक्तं प्रतिपिपादयिषयेति । परं प्रति प्रमाणेन सिसाधयिषयेत्यर्थः । नच प्रतिज्ञा निरर्थिका । तदभावे हेत्वादिविषयापरिज्ञानात् । केवलहेत्वभिधायिनोऽप्रस्तुताभिधायित्वप्रसङ्गात् ।

"साध्याभिधानात् पक्षोक्तिः पारम्पर्येण चोप्यलम् ।"

इति वदता बौद्धेन स्वप्रवृत्तिरेव स्ववचनेन विडम्बिता । पक्षोक्तिः पारम्पर्येणा[2]प्यलमित्यस्य वचनस्य प्रतिज्ञारूपत्वात् ॥

द्वितीयावयवस्य लक्षणमाह —

**साधनत्वख्यापकं लिङ्गवचनं हेतुः ॥**

इति । लिङ्गवचनं हेतुरित्येवोच्यमाने धूमोऽयं धूमवानित्यादिवचनस्यापि हेतुत्वप्रसङ्गः । तन्निवृत्त्यर्थं साधनत्वख्यापकमिति विशेषणम् । धूमवत्त्वात् धूमवत्त्वेन धूमो यस्माद् इत्यादिवचनमेव हेतुरित्यर्थः ॥

भेदमाह —

**स त्रिविधः अन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति ॥**

चकारः कारणानुमानं कार्यानुमानमकार्याकारणानुमानमिति सूत्रोक्तत्रैविध्यसूच[3]नेन । अत्र लिङ्गस्यान्वयव्यतिरेकादिरूपेण त्रैविध्यात् तद्[4]वाचकशब्दरूपो हेतुरपि तथोक्तः ।

१. 'ना', २. 'ण नाप्य' ख. ङ. च. पाठः. ३. 'चकः ।' ग. पाठः. ४. 'द्वारा च श' ख. पाठः.

उपचारात् । उपचारे च प्रयोजनं लिङ्गस्य दुष्टत्वे हेतुरपि दुष्टो भवति, अदुष्टत्वे चादुष्ट इति ज्ञापनम् ॥

आद्यं हेतुं लक्षयति—

**तत्र पञ्चरूपोऽन्वयव्यतिरेकी । रूपाणि तु पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद् व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति ॥**

तत्र तेषु त्रिविधेषु हेतुषु मध्ये। पञ्च रूपाणि यस्यासौ पञ्चरूपो हेतुः । अत्राप्युपचारः । तुशब्दस्त्रिरूप एव हेतुरिति मतस्य निरासे । अबाधितः प्रमाणाविरुद्धो विषयः साध्यार्थो यस्यासावबाधितविषयः । तस्य भावस्तत्त्वम् । असन् प्रतिपक्षः साध्यत्वेन यस्यासावसत्प्रतिपक्षः । तस्य भावस्तत्त्वम् ॥

पञ्च रूपाणि व्याचष्टे—

**तत्र साध्यधर्मविशिष्टो धर्मी पक्षः । तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्मत्वम् ॥**

इति । स्वेन व्याप्ये पक्षे वृत्तिर्यस्यासौ व्याप्यवृत्तिः। तस्य भावो व्याप्यवृत्तित्वं पक्षधर्मत्वमुच्यते । न पुनः पक्षैकदेशे व्याप्यवृत्तित्वमित्यर्थः ॥

**साध्यसमानधर्मा धर्मी सपक्षः । तत्र सर्वस्मिन्नेकदेशे वा हेतोर्वृत्तिः सपक्षे सत्त्वम् ॥**

इति । समानो धर्मो यस्यासौ समानधर्मा । 'धर्मादनिच् केवलादि'ति बहुव्रीहौ[1] धर्मशब्दादनिच् । साध्येन समानधर्मा साध्यसमानधर्मा इति पश्चात् तत्पुरुषः ॥

---

१. 'ति त' ख. पाठः.

**साध्यव्यावृत्तधर्मा धर्मी विपक्षः। तत्र सर्वस्मिन् विपक्षे हेतोरवृत्तिर्विपक्षाद् व्यावृत्तिः ॥**

साध्याद् व्यावृत्तः साध्यव्यावृत्तः । स एव धर्मो यस्यासौ साध्यव्यावृत्तधर्मा । साध्यशून्य इत्यर्थः । धर्मीति पदेन

"तस्माद् वैधर्म्यदृष्टान्ते नेष्टोऽवश्यमिहाश्रयः ।
तदभावे च तन्नेति वचनादपि तद्गतेः ॥"

इति बौद्धमतं निरस्यति । नहि धर्मिणमन्तरेण वचनमात्राद् व्यतिरेकप्रतीतिर्भवितुमर्हति । धूमे सति वह्निरवश्यमस्तीति वचनमात्रादेवान्वयसिद्धौ साधर्म्यदृष्टान्तेऽपि धर्मिणो वैयर्थ्यप्रसङ्गात् । यद्यपि हेतुरूपाभिधानप्रस्तावादेव हेतोरिति लभ्यते, तथापि स्पष्टार्थं पुनरभिधानम् ॥

**प्रमाणाविरोधिनि प्रतिज्ञातार्थे* वृत्तिरबाधितविषयत्वम् ॥**

इति । प्रमाणेन प्रत्यक्षादिना विरोधः स न विद्यते यस्यासौ प्रमाणाविरोधी तस्मिन् । प्रतिज्ञातेऽर्थेऽनित्यत्वादिधर्मके शब्दादौ वृत्तिः । हेतोरित्यधिकारात् प्रस्तावाच्च लभ्यते ॥

**साध्यतद्विपरीतयोः साधनस्यात्रिरूपत्वमसत्प्रतिपक्षत्वम् ॥**

इति । साध्यं शब्दानित्यत्वादि । तद्विपरीतं शब्दनित्यत्वादि । तयोरुभयोरपि साध्यमानयोः साधनस्य कार्य-

* 'र्थे हेतोर्वृत्ति' इति मूलकोशपाठः.

त्वादेरत्रिरूपत्वं पक्षधर्मत्वसपक्षेसत्त्वविपक्षाद्व्यावृत्तिलक्षण-रूपत्रयरहितत्वम्। किन्तु एकस्मिन् साध्य एव त्रिरूपत्वमिति भावः ॥

अन्वयव्यतिरेकिणोऽवान्तरभेदं सोदाहरणमाह —

**स द्विविधः सपक्षवृत्तिभेदात् ॥**

इति। सपक्षे सर्वस्मिन्नेकदेशे वा या वृत्तिस्तस्या भेदात् ॥

**तद् यथा अनित्यः शब्दः कार्यत्वादिति सपक्ष-व्यापकः ॥**

इति। नन्वनित्यत्वं नाम विनाशित्वम्। तस्मिन् साध्ये प्रागभावोऽपि सपक्षः। नच तत्र कार्यत्वमस्ति। अतः कथमयं सपक्षव्यापको हेतुः। नैष दोषः। विनाशी खल्वनित्य[1] इत्युच्यते। विनाशश्चाभावः। नच प्रागभावस्या[2]-भावान्तरमस्ति। भावोत्पादेनैव प्रागभावो नष्ट इति व्यव-हारोपपत्तेः। भावाभावयोः सहानवस्थानलक्षणो हि विरोध इति। अन्ये तु —— अनित्यत्वं नाम वस्तुत्वे सति विनाशि-त्वम्। तस्मिन् साध्ये न प्रागभावस्य सपक्षत्वमिति परि-हरन्ति। ननु तथापि कार्यत्वं नाम प्रागसतः पश्चादात्म-लाभोऽभिधीयते। तच्चानित्यत्वशून्ये प्रध्वंसा[3]भावेऽप्यस्तीति व्यभिचार इति चेत्। सत्यं, सामान्यवत्त्वे सतीति वक्ष्य-माणविशेषणस्यात्रापि स्मरणाद्दूषणमेतत्। अथवा स्व-कारणसमवायस्तु कार्यत्वम्; तच्च प्रध्वंसे नास्तीति ॥

१. 'त्य उच्य' ख. ङ. च. पाठः. २. 'स्य' च. पाठः. ३. 'सेऽप्य' ङ. पाठः.

**अनित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैकदेशवृत्तिः ॥**

इति। इन्द्रियग्राह्यत्वादनित्यः शब्द इत्युक्ते मनोग्राह्येणात्मना नित्येन व्यभिचारः। तन्निवृत्त्यर्थं बाह्यग्रहणम्। तथापि परमाणूनां योगिबाह्येन्द्रियग्राह्यत्वमस्ति, नचानित्यत्वमिति तन्निरासायास्मदादिग्रहणम्। सत्तादिसामान्ये व्यभिचारनिरासार्थं सामान्यवत्त्वे सतीति विशेषणम्। सकलशब्दपक्षीकरणे[2]ऽपि बाह्येन्द्रियग्राह्यत्वं नाम ग्रहणयोग्यत्वं विवक्षितम्। तच्च सर्वशब्दानामस्ति। ब्रह्मभाषितादीनां तु दूरत्वेन श्रोत्रसम्बन्धाभावादग्रहणं, न पुनरयोग्यत्वात्। अतो न पक्षैकदेशवृत्तिरयं हेतुः। किन्तु सुखादावनित्ये सपक्षे न वर्तत इति सपक्षैकदेशवृत्तिरिति ॥

केवलान्वयिनो लक्षणमाह —

**पक्षव्यापकः सपक्षवृत्तिरविद्यमानविपक्षः केवलान्वयी ॥**

इति। अबाधितविषयत्वासत्प्रतिपक्षत्वे सतीति विशेषणमत्रोत्तरलक्षणवाक्ये चार्थाल्लभ्यते इति सङ्ग्रहे नो[3]क्तम्॥

**स पूर्ववद् द्विविधः ॥**

इति। सपक्षव्यापकत्वसपक्षैकदेशवृत्तित्वभेदाद् द्विविध इत्यर्थः ॥

---

१. 'सैव प्रतिज्ञा। सा' ग. पाठः. २. 'क्षीकारेऽपि' ङ. पाठः. ३. 'णो' च. पाठः.

उभयोरप्युदाहरणमाह —

तद् यथा — विवादास्पदीभूतान्यदृष्टादीनि कस्यचित् प्रत्यक्षाणि, प्रमेयत्वात्। करतलामलकवत्। सैव प्रतिज्ञा। मीमांसकानामप्रत्यक्षत्वाद् अस्मत्सुखादिवत् ॥

इति। अत्राद्यो हेतुः सपक्षव्यापकः। द्वितीयस्तु सपक्षैकदेशवृत्तिः। घटादावभावात्। ननु मीमांसकानामप्रत्यक्षत्वं नाम विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वान्मीमांसकव्यतिरिक्तपुरुषप्रत्यक्षत्वं यदि हेतुः, तदा साध्याविशिष्टः। अथ निषेधमात्रं हेतुः, तदा शशविषाणादिना व्यभिचारः। तत्र मीमांसकानामप्रत्यक्षत्वसद्भावेऽपि कस्यचित् प्रत्यक्षत्वाभावादिति। मैवम्[1]। मीमांसकानां प्रत्यक्षातिरिक्तप्रमाणग्राह्यत्वस्य[2] हेतुत्वेन विवक्षितत्वात्। केवलान्वयी प्रमाणमबाधितविषयत्वासत्प्रतिपक्षत्वे सति पक्षव्यापकत्वे च सति सपक्ष एव सत्त्वात् अन्वयव्यतिरेकिवत् ॥

केवलव्यतिरेकिणो लक्षणमाह —

पक्षव्यापकोऽविद्यमानसपक्षो विपक्षाद् व्यावृत्तः केवलव्यतिरेकी ॥

इति ॥

तस्योदाहरणमाह —

तद् यथा—सर्वं कार्यं सर्ववित्कर्तृपूर्वकं, कादाचित्कत्वात्। यत् सर्ववित्कर्तृपूर्वकं न भवति तत् कादाचित्कमपि न भवति। यथाकाशादि ॥

---

१. 'नै' च. पाठः. २. 'णविषयत्व' ङ. पाठः.

इति । नचाप्रसिद्धविशेषणः पक्ष इति दूषणम् । सर्वविदादिपदार्थानां प्रसिद्धत्वात् । पदार्थान्वयरूपवाक्यार्थस्याप्रसिद्धत्वादप्रसिद्धविशेषणः पक्ष इति चेत् । तर्हि पर्वतोऽग्निमानिति वाक्यार्थस्याप्यनुमानात् पूर्वमप्रसिद्धत्वादप्रसिद्धविशेषणपक्षत्वेन धूमानुमानस्याप्यप्रसिद्धविशेषणत्वप्रसङ्गः । नन्वेवं शशविषाणपूर्वकत्वमपि साध्यं स्यात् । सर्वं कार्यं शशविषाणपूर्वकं, कादाचित्कत्वादिति । तन्न । विपक्षे बाधकप्रमाणसहितस्य केवलव्यतिरेकिणः प्रमाणत्वाभ्युपगमात्[2] । सर्ववित्कर्तृपूर्वकत्वाभावे हि कार्यत्वमेव न स्यात् । तथाहि— कार्यवैचित्र्यात् कारणवैचित्र्यमनुमीयते । कारणानां च दृष्टानां जलभूमिबीजादीनां क्वचिदवैचित्र्येऽपि कार्यस्य फलस्य वैचित्र्योपलम्भाद् विचित्रमदृष्टरूपं कारणं सिध्यतीति सर्वस्यापि कार्यस्यादृष्टरूपकारणपूर्वकत्वं सिद्धम् । तच्चादृष्टरूपं कारणमचेतनत्वाच्चेतनानधिष्ठितं दण्डादिवत् स्वकार्ये न व्याप्रियेत । नच तदजानानोऽस्मदादिस्तत् प्रेरयतीति युक्तम् । अतोऽदृष्टादिकारणगणविषयविशिष्टज्ञानवानेव कर्ता भवितुमर्हतीति तर्कसहितमेवेदं प्रमाणम् । शशविषाणपूर्वकत्वाभावे च विपक्षे न किञ्चिद् बाधकमस्ति । तथाहि — शशविषाणं नाम यदि शून्यमेव, तदा कथं कारणं स्यात् । अथातुच्छं सकलकार्यकारणभूतादृष्टाद्यभिज्ञं तत् प्रेरकं चाङ्गीक्रियते, तदा संज्ञाभेदमात्रं स्यादित्यलम् ॥

१. 'प्रामाण्यप्र' ख. ङ. च. पाठः. २. 'त् तव स' ग. पाठः. ३. 'द्यपेक्षं त' च. पाठः.

केवलव्यतिरेकिण उदाहरणान्तरमाह —

**प्रसङ्गद्वारेण वा । यथा नेदं निरात्मकं जीवच्छरीरम् । अप्राणादिमत्त्वप्रसङ्गात्, लोष्टवदिति ॥**

प्रसङ्गशब्द एव द्वारमुपायः द्वारिणस्तद्विपर्ययसाधनप्रयोगस्य सः प्रसङ्गद्वारः । तेन प्रसङ्गशब्दोच्चारणेनेत्यर्थः । केवलव्यतिरेकी प्रमाणम्, अबाधितविषयत्वासत्प्रातिपक्षत्वे पक्षव्यापकत्वे च सति विपक्षादेव सर्वस्माद् व्यावर्तमानत्वात्, अन्वयव्यतिरेकिवत् ॥

इदानीमनुमानपरिशुद्धावत्यन्तोपयोगिनां हेत्वाभासानां स्वरूपं निरूपयितुकामस्तेषां प्रसङ्गं तावद् दर्शयति —

**एतेन हेत्वाभासानामहेतुत्वमुक्तं भवति ॥**

इति । एतेन हेतुस्वरूपोपवर्णनेन । तदाभासानामहेतुत्वमुक्तं भवति, हेतुलक्षणरहितत्वादिति भावः ॥

तल्लक्षणमाह —

**हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासाः ॥**

इति । सम्यग्घेतुरपि कस्यचिदज्ञस्य हेतुवदवभासते । न पुनर्हेतुरेवेति प्रतिभाति । नचासौ हेत्वाभास इति तन्निरासायोक्तं हेतुलक्षणरहिता इति । हेतुलक्षणरहिता घटादयोऽपि भवन्ति । नच ते हेत्वाभासाः । तन्निरासायोक्तं हेतुवदवभासमाना इति । अत उभयं सम्मिलितं लक्षणम् । हेतुलक्षणरहितानामपि हेतुवदवभासमानत्वं पक्षधर्मत्वाद्यन्यतमरूपवत्त्वेन ॥

विभजते—

असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः ॥

इति ॥

एतेषां क्रमेण लक्षणमाह—

तत्रानिश्चितपक्षवृत्तिरसिद्धः ॥

इति । न निश्चिता सन्दिग्धा, नास्तीति न निश्चिता वा पक्षे वृत्तिर्यस्यासावनिश्चितपक्षवृत्तिः ॥

पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्धः ॥

इति । न सपक्षे इति भावः । साध्यं विरुणद्धीति विरुद्धः ॥

पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः ॥

इति । एकस्मिन्नर्थे साध्ये नियत ऐकान्तिकः । तस्मादन्यः अनैकान्तिकः ॥

साध्यासाधकः पक्ष एव वर्तमानोऽनध्यवसितः ॥

इति । पक्ष एव वर्तमानः केवलव्यतिरेक्यपि भवति, नचासौ हेत्वाभास इत्याशङ्क्य तद्व्यवच्छेदार्थं साध्यासाधक इति पदम् ॥

प्रमाणबाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः ॥

इति । कालस्यात्ययोऽतिक्रमः तस्मिन् सत्यपदिष्ट उक्तः कालात्ययापदिष्टः । सन्देहयोग्यपक्षोपन्यासानन्तरं हि

हेतूपन्यासस्य कालः । प्रमाणान्तरेण च विपरीतनिश्चये सन्देहयोग्यता नास्तीत्यर्थः ॥

**स्व[1]पक्षपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसमः ॥**

प्रकरणयोः पक्षप्रतिपक्षयोः साधने समः प्रकरणसमः । पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद् व्यावृत्तिरिति त्रिरूपत्वम् ॥

अथैषामवान्तरभेदं सोदाहरणं प्रपञ्चयितुकामोऽशक्यत्वं तावन्निरस्यति —

**यद्यपि चैषां सूक्ष्मो भेदोऽनन्तत्वान्न शक्यते वक्तुं, तथापि स्थूलां दृष्टिमाश्रित्य कियन्तो(ऽपि) भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते ॥**

इति । शिष्यव्युत्पत्त्यर्थमिति शेषः ॥

आद्यं हेत्वाभासं प्रपञ्चयति —

**असिद्धभेदास्तावत् । स्वरूपासिद्धो यथा — अनित्यः शब्दश्चाक्षुषत्वात् ॥**

इति । स्वरूपेणासिद्धः स्वरूपमसिद्धं वा यस्यासौ स्वरूपासिद्धः । यद्यपि चाक्षुषत्वं स्वरूपेण रूपादावस्ति, तथापि शब्दे धर्मिणि निर्दिष्टं चाक्षुषत्वं स्वरूपेण नास्तीति स्वरूपासिद्धः । नतु व्यधिकरणासिद्धः ॥

**व्यधिकरणासिद्धो यथा — अनित्यः शब्दः पटस्य कृतकत्वात् ॥**

इति । पक्षाद् विलक्षणमधिकरणं यस्यासौ व्यधिकरणः, स चासावसिद्धश्चेति विग्रहः ॥

---

१. 'स्वपर' ग. ङ. पाठः.

**विशेष्यासिद्धो यथा — अनित्यः शब्दः सामान्यवत्त्वे सति चाक्षुषत्वात् ॥**

इति। विशेष्यं चाक्षुषत्वमसिद्धं यत्र हेत्वाभासे सोऽयं विशेष्यासिद्धः ॥

**विशेषणासिद्धो यथा — अनित्यः शब्दः चाक्षुषत्वे सति सामान्यवत्त्वात् ॥**

इति। चाक्षुषत्वं तु नित्ये गोत्वादावप्यस्तीति तद्व्यवच्छेदार्थमुभयत्रापि सामान्यवत्त्वग्रहणम् ॥

**भागासिद्धो यथा — अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् ॥**

इति। यद्यपि वाय्वादिशब्दानामीश्वरप्रयत्नपूर्वकत्वमस्ति, तथापि[1] स्पृष्टादिप्रयत्नजन्यतीव्रमन्द्रादिभावानुविधायित्वलक्षणं प्रयत्नानन्तरीयकत्वमत्र विवक्षितम्। तच्च वाय्वादिशब्दे नास्तीति भागासिद्धः ॥

**आश्रयासिद्धो यथा — अस्ति प्रधानं विश्वपरिणामित्वात् ॥**

इति। आश्रयस्य प्रधानस्यासिद्धत्वात्। सिद्धौ चानुमानस्य वैयर्थ्यमिति[2] भावः ॥

**आश्रयैकदेशासिद्धो यथा — प्रधानपुरुषेश्वराः नित्याः अकृतकत्वात् ॥**

इति। पक्षीकृतानां मध्ये प्रधानस्यैकदेशस्यासिद्धत्वात् ॥

१. 'पि प्रयत्नतीव्रत्वादिभावा' ग. पाठः. २. 'र्थ्यादिति' च. पाठः.

व्यर्थविशेष्यासिद्धो यथा — अनित्यः शब्दः कृतकत्वे सति सामान्यवत्त्वात् । व्यर्थविशेषणासिद्धो यथा — अनित्यः शब्दः सामान्यवत्त्वे सति कृतकत्वात् ॥

इति । व्यर्थः विशेष्यः यस्य स व्यर्थविशेष्यः । व्यर्थविशेष्यश्चासावसिद्धश्चेति व्यर्थविशेष्यासिद्धः । एवमितरत्रापि । प्रागसतः सत्तासम्बन्धः कृतकत्वम् । तच्च प्रध्वंसे नास्तीति न व्यभिचारः । तस्मात् सामान्यवत्त्वं व्यर्थमित्यर्थः । असिद्धत्वं तु कृतकत्वस्य मीमांसकाभिप्रायेण ॥

सन्दिग्धासिद्धो यथा — धूमबाष्पादिविवेकानिश्चये कश्चिदाह, अग्निमानयं प्रदेशः धूमवत्त्वात् ॥

इति । बाष्पादीत्यादिशब्देन मशकावर्तस्वीकारः ॥

सन्दिग्धविशेष्यासिद्धो यथा—अद्यापि रागादियुक्तः कपिलः, पुरुषत्वे सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वात्। सन्दिग्धविशेषणासिद्धो यथा — अद्यापि रागादियुक्तः कपिलः, सर्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वात् ॥

इति । कपिलस्यापि कदाचिद् रागादियोगोऽस्तीति सिद्धसाध्यता स्यात् । अतः तत्परिहाराय प्रतिज्ञायामद्यापीति पदम् । अनुत्पन्नतत्त्वज्ञानत्वादित्युक्ते महायोगिभिर्व्यभिचारः । तेषां कदाचिदनुत्पन्नतत्त्वज्ञानत्वेऽप्यद्यापि रागादियोगाभावात् । अतोऽद्यापीति सर्वदेति च हेतुविशेषणं कृतम् । पाषाणादिभिर्व्यभिचारपरिहारार्थं पुरुषत्वे सतीति विशेषणम् ॥

ननूभयासिद्धान्यतरासिद्धावपि[1] कस्मादसिद्धभेदौ नोदाहृतावित्याशङ्क्याह —

**एतेऽसिद्धभेदा यदोभयवाद्यसिद्धत्वेन विवक्षिताः तदोभयवाद्यसिद्धा भवन्ति । यदा त्वन्यतरवाद्यसिद्धत्वेन विवक्षिताः, तदान्यतरवाद्यसिद्धा भवन्तीति ॥**

**विरुद्धभेदास्तावत् ॥**

प्रदर्श्यन्त इति शेषः ॥

**सति सपक्षे चत्वारो विरुद्धभेदाः । पक्षविपक्षव्यापको यथा — नित्यः शब्दः कार्यत्वात् ॥**

इति । उभयान्तोपलक्षितस्य वस्तुनः सत्त्वमनित्यत्वं, न पुनर्विनाशित्वम् । तद्विपरीतं नित्यत्वम् । अतः प्रागभावप्रध्वंसाभावयोरपि नित्यत्वात् सपक्षत्वम् । स्वकारणसमवायस्तु कार्यत्वम् । तच्च प्रागभावादिषु नास्तीति विरुद्धः[2] । यदि पुनरादिमत्त्वं कार्यत्वमिष्यते, तदा प्रध्वंसेऽपि गतत्वादनैकान्तिकः स्याद् , न विरुद्ध इति ॥

**विपक्षैकदेशवृत्तिः पक्षव्यापको यथा — नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात् ॥**

इति । योगिनां परमाणवोऽपि बाह्येन्द्रियग्राह्याः । ततः सपक्षवृत्तित्वान्न विरुद्धत्वं स्यादित्यस्मादस्मदादिग्रहणम् । तथाप्यस्मदादिबाह्येन्द्रियग्राह्यत्वं सामान्ये नित्येऽप्यस्तीति सामान्यवत्त्वे सतीति पदम् । ग्राह्यत्वं ग्रहणयोग्यत्वं विवक्षितम् । तच्च सर्वशब्देऽप्यस्तीति पक्षव्यापकः ॥

---

१. 'सिद्धयप्रकारेणापि' घ. ङ. पाठः. २. 'द्धम् ।' ङ. च. पाठः.

**पक्षविपक्षैकदेशवृत्तिर्यथा — नित्यः शब्दः प्रयत्नानन्तरीयकत्वात् ॥**

इति । प्रयत्नतारतम्यानुविधायित्वं प्रयत्नानन्तरीयकत्वम् । तच्च वाय्वादिशब्दे तृणादौ विपक्षे च नास्तीति पक्षविपक्षैकदेशवृत्तिः ॥

**पक्षैकदेशवृत्तिः विपक्षव्यापको यथा — नित्या पृथिवी कृतकत्वात् ॥**

इति । व्याख्यातप्रायमेतत् ॥

**असति सपक्षे चत्वारो विरुद्धभेदाः । पक्षविपक्षव्यापको यथा — आकाशविशेषगुणः शब्दः, प्रमेयत्वात् ॥**

इति । आकाशविशेषगुणत्वं साध्यं शब्दव्यतिरेकेणान्यत्र नास्तीति सपक्षाभावः । एवमुत्तरानुमानेष्वपि ॥

**पक्षविपक्षैकदेशवृत्तिर्यथा— आकाशविशेषगुणः शब्दः, प्रयत्नानन्तरीयकत्वात् ॥**

इति । कृतव्याख्यानमेतत् ॥

**पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा — आकाशविशेषगुणः शब्दः अस्मदादिबाह्येन्द्रियग्राह्यत्वात् ॥**

इति । ग्रहणयोग्यत्वं सर्वशब्देष्वस्ति । अन्यत्र तु क्वचित् सुखादौ नास्तीति विपक्षैकदेशवृत्तित्वम् ॥

**विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा — आकाशविशेषगुणः शब्दः, अपदात्मकत्वात् ॥**

१. 'ह्याः ।' क. पाठः.

इति । सुप्तिङन्तं पदम् । अपदात्मकत्वं भेर्यादिशब्द एवास्तीति पक्षैकदेशवृत्तित्वमस्य ॥

चोदयति —

**ननु चत्वार एव विरुद्धभेदाः, नान्ये । तेषामसिद्धलक्षणोपपन्नत्वात् ॥**

इति । चत्वार इति । ये पक्षव्यापकास्ते । नान्य इति । ये पक्षैकदेशवृत्तयः ते । कस्मात् । तेषामसिद्धलक्षणोपपन्नत्वात् । तदुक्तं पक्षधर्मस्य हि त्रयी गतिः हेतुर्विरुद्धोऽनैकान्तिको वेति ॥

परिहरति —

**नैष दोषः ॥**

इति ॥

**उभयलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात् तुलायां प्रमाणप्रमेयव्यवहारवत् ॥**

इति । यथा सुवर्णादिद्रव्येयत्तावधारणकरणत्वात् तुला प्रमाणं, तुलान्तरतुलितद्रव्येण प्रमीयमाणं प्रत्यक्षेण वा गृह्यमाणस्वरूपं प्रमेयं च भवति तथेत्यर्थः ॥

**अनैकान्तिकभेदास्तु ॥**

इति । उदाह्रियन्त इति शेषः ॥

**पक्षत्रयव्यापको यथा — अनित्यः शब्दः प्रमेयत्वात् ॥**

इति । स्पष्टमेतत् ॥

---

१. 'रहेतुत्वा' घ. पाठः.

**पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा — अनित्यः शब्दः प्रत्यक्षत्वात् ॥**

इति । अस्मदादिबाह्येन्द्रियग्रहणयोग्यत्वमत्र विवक्षितं प्रत्यक्षत्वम् । तच्च पक्षीकृते शब्दे सर्वत्रास्तीति न पक्षैकदेशवृत्तित्वमस्य । नापि पक्षत्रयव्यापकत्वमिति ॥

**पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा — गौरयं विषाणित्वात् ॥**

इति । विषाणिन एव पिण्डस्य पक्षीकृतत्वात् पक्षव्यापकत्वम् । सपक्षे च गोपिण्डे सर्वत्र सद्भावः, सद्योजातस्यापि वत्सस्य विषाणयोग्यत्वात् ॥

**पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा — नायं गौर्विषाणित्वात् ॥**

इति । प्राक्तनानुमानसपक्षविपक्षयोरत्र वैपरीत्यमिति पक्षैविपक्षव्यापकत्वमस्य ॥

**पक्षत्रयैकदेशवृत्तिर्यथा — अनित्या पृथिवी प्रत्यक्षत्वात् ॥**

इति । अत्राप्ययोगीन्द्रियग्राह्यत्वमेव प्रत्यक्षत्वं विवक्षि[२]तं वेदितव्यम् ॥

**पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा — द्रव्याणि दिक्कालमनांसि अमूर्त[३]त्वात् ॥**

---

१. 'क्षव्या', २. 'तं स्यात् । प' ग. पाठः. ३. 'तंद्रव्यत्वात्' क. पाठः.

इति। पक्षैकदेशे मनसि, द्रव्यत्वेन सपक्षे पृथिव्यादौ चामूर्तत्वहेतुर्नास्ति । आत्माकाशयोस्तु सपक्षभूतयोरस्ति । विपक्षे च गुणादौ सर्वत्रास्ति । अल्पपरिमाणरहितत्वं ह्यमूर्तत्वम् ॥

पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा — न द्रव्याणि दिक्कालमनांसि, अमूर्तत्वात् ॥

इति । अत्रापि प्राक्तनानुमानसपक्षो विपक्षीभूत इति विपक्षैकदेशवृत्तित्वमस्य, अद्रव्यत्वेन च सपक्षे गुणादौ व्यापकत्वममूर्तत्वहेतोः ॥

सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा — न द्रव्याण्याकाशकालदिगात्ममनांसि, क्षणिकविशेषगुणरहितत्वात् ॥

इति । आश्रये सत्याशुतरविनाशित्वं क्षणिकत्वम् । क्षणिकविशेषगुणरहितत्वं च पक्षीकृतेषु दिक्कालमनस्स्वेव वर्तते नाकाशात्मनोः । अद्रव्यत्वेन सपक्षे गुणादौ विपक्षेषु च पृथिव्यप्तेजोवायुषु सर्वत्रास्ति । यद्यपि तेजोद्रव्यस्य कस्यचिदग्न्यादेराशुतरविनाशित्वात् तद्विशेषगुणावपि रूपस्पर्शौ शीघ्रविनाशिनौ, तथापि सत्याश्रये विनाशाभावान्न क्षणिकत्वमिति विपक्षव्याप्तिः ॥

अनध्यवसितभेदास्तु अविद्यमानसपक्षविपक्षः पक्षव्यापको यथा — सर्वमनित्यं सत्त्वात् ॥

इति । विद्यमानत्वादित्यर्थः ॥

**अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा— सर्वमनित्यं कार्यत्वात्। विद्यमानसपक्षविपक्षः पक्षव्यापको यथा — अनित्यः शब्दः आकाशविशेषगुणत्वात्॥**

इति। स्पष्टम्॥

**विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा — सर्वं द्रव्यमनित्यं क्रियावत्त्वात्॥**

इति। पक्षीकृतेष्वाकाशादिषु क्रियावत्त्वस्याभावात् पक्षैकदेशवृत्तित्वमस्य। पक्षीकृताच्च द्रव्यादन्यत्राभावाद- साधारणत्वमिति॥

**अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा — सर्वं कार्यं नित्यम् उत्पत्तिधर्मकत्वात्॥**

इति। सर्वस्य कार्यस्य पक्षीकरणेन नित्यत्वसाधने सपक्षा आकाशादयः सन्ति, न तु विपक्षाः। अनित्यस्य सर्वस्य पक्षीकृतत्वात्॥

**अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेश- वृत्तिर्यथा — सर्वं कार्यं नित्यं सावयवत्वात्॥**

इति। अत्रापि पूर्ववत् प्रागभावप्रध्वंसाभावयोः स- पक्षत्वं, न पुनर्विपक्षत्वमिति। अविद्यमानसपक्षो विद्यमान- विपक्षः पक्षव्यापकस्तु केवलव्यतिरेकी नासाधारणः, व्या- प्तिमत्त्वात्। अव्याप्तस्तु भवत्यसाधारणः। यथा — सर्वं कार्यं प्रधानान्वितं, कार्यत्वादिति। नहि प्रधानान्वितत्वा- भावे किञ्चिद् बाधकमस्तीत्यव्याप्तिः। अत्रैव साध्ये रूपित्वा- दिति भागासिद्धोऽपीति॥

*कालात्ययापदिष्टभेदास्तु प्रत्यक्षविरुद्धो यथा — अनुष्णोऽयमग्निः कृतकत्वात् ॥

इति । सर्वथैवागृहीतस्य निषेद्धुमशक्यत्वादुष्णत्वग्रहणमङ्गीकार्यम् । ग्रहणं च प्रत्यक्षेणाग्न्यादावेव, इति प्रत्यक्षबलीयस्त्वम् ॥

अनुमानविरुद्धो यथा — अनित्याः परमाणवः मूर्तत्वात् ॥

इति । यद्यप्यनुमानमात्रेणानुमानस्य बाधो न सम्भवति, तथापि बलवता दुर्बलं बाध्यते प्रत्यक्षेणेव । नहि प्रत्यक्षं प्रत्यक्षमित्येवानुमानस्य बाधकम् । तथात्वे हि अलातचक्रप्रत्यक्षमपि बाधकं स्यात् । तत्र हि विवादपदमलातचक्रं न भवति, विशिष्टालातत्वाद् अभ्रमणावस्थालातवदित्यनुमानमेव बाधकम् । प्रत्यक्षं तु आशुभ्रमणवशाद् भ्रान्तम् । एवमिहापि परमाणुसाधकस्यानुमानस्याप्रामाण्ये धर्मिण एवाभावाद् मूर्तत्वानुमानमाश्रयासिद्धं स्यात् । प्रामाण्ये वा तस्य पारम्पर्येण नित्यत्वसाधकत्वात् तेन बाधितमिति[2] । तथाहि — अल्पपरिमाणतरतमभावः क्वचिद् विश्रान्तः, परिमाणतरतमभावत्वात् । महत्परिमाणतरतमभाववदिति निरतिशयाल्पपरिमाणवद्वस्तुसिद्धौ तस्योपादानकारणाभावादनु-

---

१. 'मथनजन्यत्वाद् नवनीतवत् ॥' ख. पाठः. २. 'तद्विषयमि' ग. घ. ङ. च. पाठः.

---

* "अविद्यमानसपक्षो विद्यमानविपक्षः पक्षैकदेशवृत्तिर्यथा — आकाशविशेषगुणः शब्दः, अपदात्मकत्वात् ।" एवं ख.मूले अधिकपाठो दृश्यते ।

त्पत्तिः ; कार्यद्रव्यापेक्षयाल्पपरिमाणानि खलूपादानानि। यथा पटस्य तन्तवः। न च परमाणुभ्योऽल्पपरिमाणं किञ्चिदस्ति। अतः कारणशून्यवस्तुत्वेन नित्यत्वे सिद्धे धर्मिग्राहकप्रमाणबाधितमिति ॥

आगमविरुद्धो यथा— ब्राह्मणेन सुरा पेया, द्रवद्रव्यत्वात् क्षीरवत् ॥

इति।

"गौळी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा।
यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः ॥
सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥"

इत्यादिरागमः। न चागमस्यैवानुमानेन बाध इति वाच्यम्। पेयत्वं हि सुरायाः पीतायाः पापाहेतुत्वं साध्यम्। अन्यथा सिद्धसाधनताप्रसङ्गः, खाद्यत्वाभावाद्, आगमेनापेयत्वापादनात्। ततश्च साध्यं दृष्टान्ते क्षीरादावागमैकसमधिगम्यमस्मदादेः। तदप्रामाण्ये च दृष्टान्तस्यासिद्धावनुमानस्यानुत्थानप्रसङ्गः। तस्मादागमस्यैवानुमानाद् बलवत्त्वमिति ॥

प्रत्यक्षैकदेशविरुद्धो यथा— सर्वं तेजोऽनुष्णं रूपित्वात् ॥

इति। सर्वस्य तेजसोऽनुष्णत्वसाधने परमाणुषु ज्योत्स्नायां चास्मदादीनां प्रत्यक्षविरोधो न सम्भवतीति प्रत्यक्षैकदेशविरुद्धः प्रत्यक्षैकदेशविरुद्ध इत्यर्थः ॥

---

१. 'का तथैवान्या न पातव्या द्वि' ग. पाठः. २. 'साध्यताम्' घ. ङ. पाठः.

अनुमानैकदेशविरुद्धो यथा—नित्याश्रयाः द्रवत्वरूपरसगन्धस्पर्शा नित्याः, अप्रदेशवृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वात् तद्गतैकत्ववत् ॥

इति। परमाणुवृत्तित्वादित्युक्ते संयोगेन व्यभिचारः। तन्निवृत्त्यर्थमप्रदेशवृत्तित्वग्रहणम्। तथापि द्वित्वादिना व्यभिचारः, तत्परिहाराय समानजात्यारम्भकत्वे सतीति विशेषणम्। तथापि द्व्यणुकेन व्यभिचारः, तन्निवृत्त्यर्थं गुणत्वे सतीति विशेषणमूह्यम्। अत्र च नैमित्तिकद्रवत्वपार्थिवपरमाणुरूपादिष्वेव नित्यत्वमनुमानेन विरुध्यते, न सांसिद्धिकद्रवत्वादिपरमाणुरूपादिष्विति। तथाहि—पार्थिवपरमाणुरूपरसगन्धस्पर्शा अग्निसंयोगजाः, पार्थिवविशेषगुणत्वाद् घटरूपादिवत्। पार्थिवतैजसपरमाणुद्रवत्वं पाकजं, पार्थिवतैजसद्रवत्वात् सर्पिःसुवर्णादिद्रवत्ववत् ॥

आगमैकदेशविरुद्धो यथा—सर्वेषां देवर्षीणां शरीराणि पार्थिवानि शरीरत्वादस्मदादिशरीरवदिति ॥

केषाञ्चिद् देवानामृषीणां च शरीराण्याप्यतैजसवायवीयानि श्रूयन्ते। तस्मादागमैकदेशविरुद्धोऽयं हेतुः ॥

प्रकरणसमस्योदाहरणं यथा—अनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति ॥

एक एवायं हेतुरनित्यत्व इव नित्यत्वेऽपि साध्ये समः, नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वाद् सपक्षवदिति ॥

---

१. 'गमैनैक' ग. पाठः.

एकत्र तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्येके[1] ॥

इति । वयमित्यर्थः । अन्ये तु प्रकरणसमोऽयमित्याहुः । भिन्नविषययोर्हेत्वोः सन्निपातो विरुद्धाव्यभिचारी मा भूदित्येकत्रेति पदम् । तथाप्यनित्यः शब्दः कार्यत्वाद् घटवत्[2], कर्मव्यतिरिक्तगुणः शब्दः सामान्यवत्त्वे सति सामान्यवतामनाधारत्वाद् रूपादिवदित्यनयोर्विरुद्धाव्यभिचारित्वं स्यात्, तन्निषेधाय विरुद्धग्रहणम् । एवमपि नित्यः शब्दः प्रमेयत्वात्, अनित्यः शब्दः कार्यत्वादित्यनयोस्तथात्वं स्यादिति तुल्यलक्षणग्रहणम् । प्रकृते प्रमेयत्वस्यानैकान्तिकत्वान्न तुल्यलक्षणत्वम् । त्रिरूपत्वलक्षणतुल्यलक्षणत्वाभावात् ॥

उदाहरति —

यथा — नित्यमाकाशममूर्तद्रव्यत्वादात्मवत् । अनित्यमाकाशमस्मदादिबाह्येन्द्रियग्राह्यगुणाधारत्वाद् घटवदिति ॥

ननु वस्तुनो द्वैरूप्यासम्भवादवश्यमन्यतरानुमानं दुष्टमेव । ततश्चासिद्ध्यादिदूषणदुष्टत्वात् तेष्वेवान्तर्भावो हि[3] भविष्यति । किं हेत्वाभासान्तराभ्युपगमनेन इत्याशङ्क्याह —

स खलु पुरुषविशेषमपेक्षमाणो हेत्वाभासो भवति । अन्यतरासिद्धवदिति ॥

१. 'के भिन्न' ग. ङ., 'के आद्यास्तु प्र' घ. पाठः. २. 'त् । गु' च. पाठः. ३. 'हि' घ. पाठः.

यथा परं प्रत्यसिद्धं हेतुं न समर्थयितुं यः शक्तः, तदपेक्षयान्यतरासिद्धो हेत्वाभासो भवति । यथा वा दूषणान्तरोद्भावनासमर्थस्य प्रकरणसमः, तथा दूषणान्तरोद्भावनायां विकलशक्तेर्विरुद्धाव्यभिचारीति । यदा त्वन्यतरानुमानस्य धर्मिग्राहकप्रमाणबाधमुद्भावयति, तदा कालात्ययापदिष्टदोषदुष्टं भवत्येकम् । अन्यत्तु प्रमाणम् । अत्र पुनरनित्यत्वानुमानमेव धर्मिग्राहकप्रमाणबाधितम् । तथाहि व्यापकमेकमेवाकाशमिति प्रत्यक्षपरिच्छेदे समर्थितम् । अतः समानजातीयोपादानकारणाभावादाकाशमनुत्पत्तिधर्मकं सिद्धमिति कथं तदनित्यं भविष्यतीति ॥

हेतुप्रसङ्गेन हेत्वाभासानभिधायोदाहरणाख्यमवयवमाह —

**सम्यग् दृष्टान्ताभिधानमुदाहरणम् ॥**

इति । सम्यगित्यभिधानविशेषणं भिन्नं पदम् । तच्चाव्याप्त्यभिधानादेर्निरासार्थम् ॥

उदाहरणस्य भेदमाह —

**तद् द्विविधं साधर्म्यवैधर्म्यभेदात् ॥**

इति । साधर्म्यवैधर्म्ये एव भेदः साधर्म्यवैधर्म्यभेदः, तस्मात् ॥

द्विविधस्यापि तस्य लक्षणोदाहरणे दर्शयति —

**अन्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणम् । यथा — अनित्यः शब्दः तीव्रादिधर्मोपेतत्वात् । यद्यत् तीव्रादिधर्मोपेतं तदनित्यं दृष्टं, यथा सुखादि । व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणम् । यथा—**

यदनित्यं न भवति तत् तीव्रादिधर्मोपेतमपि न भवति, यथाकाशमिति ॥

दृष्टग्रहणं व्याप्तेः प्रमाणोपपन्नत्वं सूचयितुं, न पुनरवश्यमुदाहरणे वाच्यमिति नियमयितुम् । शेषं सुगमम् ॥

उदाहरणलक्षणाभिधानात् तदाभासा निरस्ता भवन्तीत्यभिप्रायेण तल्लक्षणमवान्तरभेदं च सोदाहरणमाह

उदाहरणलक्षणरहिता उदाहरणवदवभासमाना उदाहरणाभासाः । ते चानेकप्रकाराः । तथाहि । अनित्यं मनो मूर्तत्वादित्यस्मिन् प्रयोगे सर्वे उदाहरणाभासा उच्यन्ते ॥

इति । विस्तरभीत्येति शेषः ॥

यन्मूर्तं तदनित्यं दृष्टं, यथा परमाणुरिति साध्यविकलः ॥

साध्यस्यानित्यत्वस्य परमाणावभावात् ॥

यथा कर्मेति साधनविकलः ॥

इति । साधनस्य मूर्तत्वस्य कर्मण्यभावात् ॥

यथाकाशमित्युभयविकलः ॥

इति । उभाभ्यां साध्यसाधनाभ्यां विकलः । दृष्टान्ताभास इति सर्वत्र सम्बन्धः ॥

यथा खरविषाणमित्याश्रयहीनः ॥

इति । स्पष्टम् ॥

घटवदित्यव्याप्त्यभिधानम् ॥

---

१. 'स्पष्टम् ॥' ग. घ. ङ. पाठः. २. 'शशवि' ख. पाठः.

इति । न व्याप्त्यभिधानमव्याप्त्यभिधानम् । यन्मूर्तं तदनित्यं दृष्टं, यथा घट इति वचनमन्तरेण व्याप्तेरप्रतीतेः ॥

**यदनित्यं तन्मूर्तं दृष्टमिति विपरीतव्याप्त्यभिधानम् ॥**

इति । यत्र साधनजातीयमस्ति तत्र साध्यजातीयमवश्यमस्तीति वक्तव्यम् । अन्यथाभिधानं तु विपरीतव्याप्त्यभिधानम् ॥

**एतौ वचनदोषौ ॥**

इति । अव्याप्त्यभिधानविपरीतव्याप्त्यभिधानरूपौ वचनदोषौ । आद्याश्चत्वारोऽर्थदोषा इति भावः ॥

**यदनित्यं न भवति, तन्मूर्तमपि न भवति, यथा परमाणुरिति साधनाव्यावृत्तः ॥**

इति । साधनं मूर्तत्वमव्यावृत्तं यस्मादसौ साधनाव्यावृत्तः । साधनमव्यावृत्तं यत्र इति वा साधनाव्यावृत्तः । उदाहरणाभास इति सर्वत्र सम्बन्धात् सर्वत्र पुल्लिङ्गनिर्देशः[1] ॥

**यथा कर्मेति साध्याव्यावृत्तः । यथा घट इत्युभयाव्यावृत्तः । यथा खपुष्पमित्याश्रयहीनः[2] ॥**

इति । व्यक्तमेतत् ॥

**आकाशवदित्यव्याप्त्यभिधानम् ॥**

इति । यदनित्यं न भवति तन्मूर्तमपि न भवतीत्यभिधानमन्तरेण व्याप्तेरप्रतीतेः ॥

१. 'स्माद दृष्टान्ताद' घ. ङ. पाठः. २. 'खरविषाणमि' ग. पाठः.

**यदमूर्तं तदनित्यमपि न भवति, यथाकाशमिति विपरीतव्याप्त्यभिधानम् ॥**

इति । यत्र साध्यं नास्ति तत्र साधनमपि न भवतीति खलु व्यतिरेको वक्तव्यः । अन्यथाभिधानं साधनात् साध्यसिद्धावङ्गं न भवतीति दोष एव ॥

**एतौ वचनदोषौ ॥**

इति । अव्याप्त्यभिधानविपरीतव्याप्त्यभिधानलक्षणौ ॥

**अत्राद्याः षट् साधर्म्योदाहरणाभासाः । इतरे षड् वैधर्म्योदाहरणाभासाः ॥**

इति । व्यक्तम् ॥

**अन्ये तु सन्देहद्वारेणापरानष्टावुदाहरणाभासान् वर्णयन्ति ॥**

इति । सन्देहो द्वारमुपायः तेन ॥

**सन्दिग्धसाध्यो यथा—महाराज्यं करिष्यत्ययं, सोमवंशोद्भूतत्वाद् विवक्षितराजपुत्रवत् ॥**

इति । सोमवंशोद्भूतत्वेन निश्चित एव राज्यमकुर्वाणो दृष्टान्तीकृतः । न चासौ राज्यं करिष्यतीति निश्चयः । अतः सन्दिग्धसाध्य एव दृष्टान्तः ॥

**सन्दिग्धसाधनो यथा — नायं सर्वज्ञो रागादिमत्त्वाद्, रथ्यापुरुषवत् ॥**

---

१. 'योऽस्ति । अ' ङ. पाठः.

इति । अत्रापि येनकेनचित् प्रकारेण निश्चितोऽसर्वज्ञतया रागादिमत्त्वेनानिश्चितो दृष्टान्तीकृतः ॥

सन्दिग्धोभयो यथा — गमिष्यत्ययं स्वर्गं विवक्षितः पुरुषः, समुपार्जितशुक्लधर्मत्वाद् देवदत्तवत् ॥

इति । अत्र सन्दिग्धमुभयं स्वर्गगमनं समुपार्जितशुक्लधर्मत्वं च यस्यासौ सन्दिग्धोभयः पुरुषो दृष्टान्तीकृतः ॥

सन्दिग्धाश्रयो यथा — नायं सर्वज्ञो बहुवक्तृत्वाद्, भविष्यद्देवदत्तपुत्रवत् ॥

इति । भविष्यद्देवदत्तपुत्रे प्रमाणाभावात् सन्दिग्धाश्रय उदाहरणाभासः ॥

सन्दिग्धसाध्याव्यावृत्तो यथा — यो महाराज्यं न करिष्यति स सोमवंशोद्भूतोऽपि न भवति, यथान्यो राजपुत्रः ॥

इति । साध्यमव्यावृत्तं यस्मादसौ साध्याव्यावृत्तः । सन्दिग्धश्चासौ साध्याव्यावृत्तश्चेति सन्दिग्धसाध्याव्यावृत्तः । सोमवंशादन्यत्रोद्भूतस्यापि महाराज्याकरणे प्रमाणाभावात् ॥

सन्दिग्धसाधनाव्यावृत्तो यथा — यस्तु सर्वज्ञः स रागादिरहितः, यथा समस्तशास्त्राभिज्ञः ॥

इति । समस्तशास्त्राभिज्ञस्यापि रागादिरहितत्वे प्रमाणाभावात् सन्दिग्धसाधनाव्यावृत्त इत्यर्थः ॥

सन्दिग्धोभयाव्यावृत्तो यथा — यः स्वर्गं न गमिष्यति स समुपार्जितशुक्लधर्मोऽपि न भवति, यथा दुःस्थः पुरुषः ॥

इति । दुःस्थस्यापि पुरुषस्य स्वर्गागमने शुक्लधर्माभावे च प्रमाणाभावादिति भावः ॥

**सन्दिग्धाश्रयो यथा—यः सर्वज्ञः स बहुवक्तापि न भवति, यथा भविष्यद्देवदत्तपुत्रः ॥**

इति । स्पष्टमेतत् ॥

चतुर्थावयवस्य लक्षणमाह—

**दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिरव्यापकं वचनमुपनयः ॥**

इति । साधनस्य पक्षे व्याप्तिरव्यापकं वचनमुपनय इत्युक्ते हेतुरूपवचनस्याप्युपनयत्वप्रसङ्ग इति तन्निवृत्त्यर्थं दृष्टान्तोपमानेनेति पदम् । तच्चोपलक्षणम् । तेन दृष्टान्तोपमानेन वा दृष्टान्तवैधर्म्येण वा सहेत्यर्थः । शेषं स्वरूपकथनार्थम् । स द्विविध इत्यध्याहार्यम् ॥

साधर्म्यवैधर्म्ये दर्शयति—

**तथाच तीव्रादिधर्मोपेतः शब्द इति साधर्म्योपनयः । न च तथा तीव्रादिधर्मोपेतः शब्दोऽपि न भवतीति वैधर्म्योपनयः ॥**

इति । यद्यपि "द्वौ नञौ प्रकृतमर्थं गमयत" इति न्यायेनार्थभेदो नास्ति, तथाऽप्युक्तिभेदादुपनयभेदः । उक्तिभेदोऽप्युदाहरणभेदादिति ॥

**उपनयानन्तरम् ॥**

निगमनं व्याख्यायत इति शेषः ॥

---

१. 'द्वैविध्यं द' च. पाठः. २. 'ब्दो न' क. पाठः.

तदाह —

**सहेतुकं प्रतिज्ञावद् वचनं निगमनम् । तस्मादनित्य एवेति ॥**

सहेतुकमिति । तस्मादिति । अनूद्यमानहेतुकमित्यर्थः । प्रतिज्ञावदिति तत्समानं, न तु प्रतिज्ञैव । परेणानिश्चितस्य सिसाधयिषितस्याभिधानं हि प्रतिज्ञा । निगमनं तु प्रतिज्ञातार्थसाधकहेत्वभिधानेन निश्चितस्यार्थस्याभिधानमिति ॥

एवं तर्हि व्याप्तलिङ्गाभिधानादेव साध्यसिद्धेर्व्यर्थं निगमनमित्याशङ्क्याह —

**न चेदमनर्थकं, साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वादस्य ॥**

इति । साध्यमनित्यत्वादि । तस्य विरुद्धं नित्यत्वादि । तस्याभावः अनुपपन्नत्वम् । तस्य प्रतिपादकं यत् प्रमाणं, तस्य सूचकत्वात् । तस्मादनित्य इत्युक्ते 'सिद्धे सत्यारम्भो नियमाय' इति न्यायान्नित्यो न भवति, तत्र प्रमाणाभावाद् बाधकसद्भावाच्चेति प्रतीतेः ॥

तदपि किमर्थमित्याशङ्क्याह —

**न च तदन्तरेण साध्यावधारणमुपपद्यते ॥**

इति । तदन्तरेण विपक्षे बाधकप्रमाणमन्तरेण । साध्यावधारणं निश्चयो नोपपद्यते ॥

अस्मिन्नर्थे सूत्रसंवादमाह —

**तथाचोक्तं "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" (न्यायसू० १- १- ४१) इति ॥**

---

१. 'त्वात् तस्मादनित्यः ॥ इ' ग. पाठः.

इति। विमृश्य संशयं कृत्वा। निर्णयः पुरुषेण क्रियते। काभ्याम्। पक्षप्रतिपक्षाभ्याम्। पक्षविषयं साधनं, विपक्षविषयं दूषणं चोपचारात् पक्षप्रतिपक्षशब्देनोच्यते ॥

किञ्च निगमनमसाधनाङ्गमिति ब्रुवतो बौद्धस्य स्वप्रवृत्तिविरोध इत्याह—

**निगमनाभिधानमसाधनाङ्गमभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छतो निग्रहस्थानं प्रसज्यते, निगमनार्थत्वाद् बाधकस्य ॥**

इति। निगमनप्रयोजनत्वादित्यर्थः। क्षणिकत्वादौ सत्त्वादिसाधनमभिधाय पश्चादसन्तोऽक्षणिकास्तस्य क्रमाक्रमविरोध इत्यादिना बाधकं प्रमाणं ब्रुवतो बौद्धस्य स्वप्रवृत्तिविरोधो निग्रहस्थानं स्यादित्यर्थः ॥

ननु सत्यपि तत्र निगमनवचने विप्रतिपद्यमानस्य परितोषाभावाद् बाधकमेवाभिधीयतां, किमनेनेत्याशङ्क्याह —

**निगमनार्थविप्रतिपत्तौ हि बाधकप्रमाणोपन्यासो युक्तः, हेत्वर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासवदिति ॥**

इदानीं पञ्चावयवानुमानस्तुतिद्वारेण कथालक्षणं प्रसञ्जयति—

**सोऽयं परमो न्यायः विप्रतिपन्नपुरुषप्रतिपादकत्वात् कथाप्रवृत्तिहेतुत्वाच्च ॥**

इति। सोऽयं पञ्चावयवरूपो न्यायः। परमः उत्कृष्टः।

१. 'षं प्रति प्र' ख. पाठः.

का पुनरियं कथा इत्याशङ्कयाह —

**वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा ॥**

इति । साधनदूषणरहितं पक्षप्रतिपक्षपरिग्रहमात्रं कथा मा भूदिति वादिप्रतिवादिग्रहणम् । यथायोग्यं साधनदूषणवादिनोरित्यर्थः ॥

भेदमाह —

**सा द्विविधा । वीतरागकथा विजिगीषुकथा चेति ॥**

तयोर्लक्षणमाह —

**यत्र वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति, सा वीतरागकथा वादसंज्ञयैवोच्यते ॥**

इति । यथा विजिगीषुकथायां वाद इति सामान्यसंज्ञा जल्प इति वितण्डेति च विशेषसंज्ञा च दृष्टा, तथात्र न विशेषसंज्ञान्तरमस्तीत्यर्थः । वादसंज्ञा च सकलकथासाधारणीति लोकव्यवहारेण विज्ञायते । तथाच जल्पेऽपि क्रियमाणे वादं कुरुत इति व्यवहरन्ति ॥

वीतरागकथा वादसंज्ञयैवोच्यत इत्यत्र सूत्रकारवचनं दर्शयति —

**तथाचोक्तं "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" (१. २. १) ॥**

इति । साध्यतेऽनेन पक्ष इति साधनम् । उपालभ्यते दूष्यते प्रतिपक्षसाधनं येन स उपालम्भः । प्रमाणैस्तर्केण वा विषयीकृतसामर्थ्यौ साधनोपालम्भौ यत्र स प्रमाणतर्कसाधनोपालम्भः । पक्षप्रतिपक्षपरिग्रहत्वं तु कथात्रयेऽप्यनुवर्तीत्यति-

व्याप्तिर्मा भूदिति प्रमाणेत्यादिपदम्। तत्र साधनोपालम्भग्रहणेन वितण्डातो व्यवच्छेदः। नहि वितण्डायामुभाभ्यामपि साधनमुपालम्भश्चोच्यते। जल्पाद् व्यवच्छेदस्तु प्रमाणतर्कग्रहणेन। कथमनेन साधनेन स्वपक्षः साधयितुं शक्यः, अनेन चोपालम्भेन प्रतिपक्षसाधनं दूषयितुं शक्यमिति प्रमाणेन निश्चितसामर्थ्यौ तर्कविषयीकृतसामर्थ्यौ वा साधनोपालम्भौ वादे कार्यौ[1] नान्यथेति शुद्धाभिसन्धित्वं पुरुषयोर्नियम्यते। न चैवं जल्पे। तत्र[2] ह्येकान्तपराजयावस्थायां छलादिप्रयोगस्यापि सूत्रितत्वात्। तथाच वक्ष्यति — सिद्धान्ताविरुद्ध इत्यादिपदं तु शिष्यशिक्षार्थम्। सिद्धान्ताविरुद्ध एव वादः कार्यः। न पुनः शुष्कतार्किकवदीश्वरस्य शरीराभ्युपगमेन। तथा स्वपक्षसाधनं प्रतिपक्षसाधनदूषणं साधनसमर्थनं दूषणसमर्थनं शब्ददोषवर्जनमित्येतैः पञ्चभिरवयवैरुपपन्नो वादः कार्यः, येनाभिमतसिद्धिः स्यात्। शब्ददोषास्तु निरर्थकापार्थकातिद्रुतोच्चारणाप्रसिद्धपदप्रयोगादयः। वादोऽपि द्विविधः सप्रतिपक्षोऽप्रतिपक्षश्च॥

तत्रापि सूत्रं दर्शयति —

*"तं प्रतिपक्षहीनमपि वा कुर्यात् प्रयोजनार्थमर्थित्वे सति॥"

इति। तं वादम्। प्रतिपक्षविषयं साधनं प्रतिपक्षः,

---

१. 'वक्तव्यौ ना', २. 'तस्यैका' ग. पाठः.

---

* 'प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे' (न्यायसू० अध्या० ४. आ० २. सू०४९) इति मुद्रितपुस्तके।

उपचारात् । तेन हीनमपि वा कुर्यात् । प्रयोजनार्थं तत्त्वज्ञानार्थम् । अर्थित्वे सतीति ॥

अस्य सूत्रस्य तात्पर्यार्थमाह —

यथा शिष्यो गुरुणा सह प्रश्नद्वारेणैवेत्यर्थः ॥

इति । वादं करोति, न पुनः प्रतिपक्षसाधनाभिधानद्वारेणेति शेषः ॥

विजिगीषुकथाया लक्षणमाह —

यत्र तु विजिगीषुः विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्तते, वीतरागो वा परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थं च प्रवर्तते, सा चतुरङ्गा । वादिप्रतिवादिसभापतिप्राश्निकाङ्गा विजिगीषुकथा जल्पवितण्डासंज्ञोक्ता ॥

इति । लाभः सुवर्णादिप्राप्तिः । पूजा वचनेन सत्कारः । ख्यातिः कीर्त्तिर्लोके । जयपराजयार्थमिति । स्वस्य जयार्थं परस्य पराजयार्थम् । परानुग्रहार्थमिति । परेषां शिष्यादीनां वेदप्रामाण्यमोक्षादौ निश्चयोत्पादनद्वारेण मोक्षशास्त्राचार्यादौ श्रद्धोत्पादनद्वारेण चानुग्रहः, तदर्थम् । ज्ञानाङ्कुरस्य आत्मस्थस्य च शिष्यस्थस्य च । संरक्षणार्थं बौद्धादिमृगेभ्यः । सा जल्पसंज्ञा वितण्डासंज्ञा चोक्तेत्यर्थः ॥

अत्र सूत्रकारसंवादमाह —

तथाचाह "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्" (४. २. ५०) ॥

---

१. 'जय' ग. घ. च. पाठः.

इति ॥

उभयरूपाया विजिगीषुकथाया लक्षणं सौत्रमेवेत्याह —

**"यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः" (१. २. २) ॥**

इति। यथोक्ते वादलक्षणे यदुपपन्नं योग्यं तद् यथोक्तोपपन्नम्। तेनोपपन्नः सम्पन्नः यथोक्तोपपन्नोपपन्न इति एकस्योपपन्नशब्दस्य लोपो द्रष्टव्यः। सूत्रत्वात्। उपपन्नश्च साधनोपालम्भवान् पक्षप्रतिपक्षपरिग्रहः[1] पञ्चावयवोपपन्न इति यावत्। प्रमाणतर्कग्रहणं त्वनुपपन्नं, शुद्धाभिसन्धिनैव जल्पः कार्य इति नियमाभावात्। सिद्धिः साधनम्। उपालम्भनमुपालम्भः। छलजातिनिग्रहस्थानैः साधनोपालम्भौ यत्र स तथोक्तः। यद्यपि छलादीनामसदुत्तरत्वात् परमार्थतस्तैः स्वपक्षसाधनं परपक्षोपालम्भश्च कर्तुं न शक्यते, तथापि भ्रान्तानां साधनोपालम्भबुद्धिजननात् साधनोपालम्भहेतुत्वमुक्तमिति। अथवा, प्रमाणैरेव साधने उपालम्भे च क्रियमाणे तद्विघातार्थं[2] परैः प्रयुक्तानां छलादीनामनुद्भावने प्रमाणेषु दूषितत्वबुद्ध्या साधनमुपालम्भश्च न स्यात्। तदुद्भावने तु छलादीन्येवासद्दूषणत्वेन प्रतीतानि साधनोपालम्भहेतूनां प्रमाणानामङ्गभावं भजन्त इति पारम्पर्येण छलादीनां तद्धेतुत्वम् ॥

**"स प्रतिपक्षस्थापनाहीनो वितण्डा" (१. २. ३) ॥**

१. 'ह इति यावत्।' ग. च. पाठः. २. 'थैव प' च. पाठः.

इति । स वादो जल्पश्च । प्रतिपक्षः स्थाप्यते यया सा प्रतिपक्षस्थापना । तया हीनो वितण्डेति, न पुनः प्रतिपक्ष एव नास्तीत्यर्थः । एवञ्च वीतरागवितण्डा विजिगीषुवितण्डेति द्विविधा वितण्डा । एतच्च "तं प्रतिपक्षहीनमपि वा कुर्यात्" इत्यादिसूत्रेणापि सूचितम् ॥

अज्ञातस्वरूपाणां छलादीनां न साधनोपालम्भहेतुत्वं नापि स्ववाक्ये परिवर्जनं परवाक्येषूद्भावनं वा कर्तुं शक्यमिति तेषां लक्षणमाह —

"वचनविघातोऽर्थविकल्पोपपत्त्या छलम्" (१. २. १०) ॥

इति । अर्थस्य विरुद्धत्वेन कल्पनमर्थविकल्पः, तस्योपपत्तिः सम्भवः, तया वचनस्य विघातो दूषणं यत् तच्छलम् । उदाहरणं तु विशेषलक्षणे भविष्यति ॥

विभागमाह —

"तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति" (१. २. ११) ॥

त्रैविध्यं लक्षणत्रैविध्यात् ॥

अतस्तदाह —

"अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्" (१. २. १२) ॥

इति । अनेकार्थाभिधायि पदं वाक्यं चात्राविशेषः । तस्यार्थाभिधानाय प्रयोग एव उपचारादविशेषाभिहितेऽर्थ इत्युक्तः । नार्थपरिज्ञाने छलस्य प्रसङ्गः । नवसङ्ख्यादिस्तु न

---

१. 'पु दोषेद्भा' घ. च. पाठः. २. 'ख्य' च. पाठः.

वक्तुरभिप्रेत इत्युपचारोऽत्राश्रितः । तस्मिन् सति वक्तुरभिप्रायादर्थान्तरकल्पना यत्र वचनविघाते निमित्तं, तद् वाक्छलं, वाङ्निमित्तत्वात् । यद्यपि सर्वमपि छलं वाङ्निमित्तं, तथाप्यन्यत्र सामान्योपचारयोः प्रधानत्वात् ताभ्यां व्यपदेशः ॥

उदाहरणमाह —

नवकम्बलोऽयं माणवकः इत्युक्ते छलवाद्याह कुतोऽस्य नव कम्बला इति ॥

नूतनकम्बलत्वं वक्तुर्विवक्षितम् । प्रतिवादी तु नवसङ्ख्याककम्बलत्वं विवक्षितमित्यध्यारोप्यासम्भवेन दूषयति ॥

तस्य परिहारमाह —

तस्याप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यं, नवः कम्बलोऽस्येति वक्तुरभिप्रायापरिज्ञानात् ॥

इति ॥

अथवाभिप्रायं जानाति, तत्राह —

उत्तरापरिज्ञानाद्वा ॥

इति । अप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यमित्यनुवर्तते । सत्यम् । सिद्धं साध्यते इत्याद्युत्तरापरिज्ञानात् ॥

दूषणान्तरमाह

विप्रतिपत्तिर्वा विपरीतपरिज्ञानादिति ॥

इति । विपरीतस्य वक्तुरभिप्रायादन्यार्थस्य नवसंख्याभिसन्धित्वस्य परिज्ञानात् ॥

---

१. 'सिद्धसाध्यतेत्युत्त' ख. पाठः.

"सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्" (१. २. १३) ॥

इति । यस्य ब्राह्मणादेश्चतुर्वेदाभिज्ञत्वलक्षणो धर्मः प्रायेण सम्भवति, स सम्भवच्छब्देनोक्तः । तस्यातिव्यापि सामान्यमतिसामान्यम् । तेन योगादसम्भूतार्थकल्पना यत्र वचनविघाते निमित्तं, तत् सामान्यनिमित्तत्वात् सामान्यच्छलम् ॥

अत्रोदाहरणमाह —

अहोनुखल्वयं ब्राह्मणश्चतुर्वेदाभिज्ञ इत्युक्ते केनचिन्न्यायवाद्याह — किमत्राश्चर्यं, सम्भवति हि ब्राह्मणे चतुर्वेदाभिज्ञत्वमिति । अत्र छलवाद्याह — न, व्रात्येनानैकान्तिकत्वात् ॥

इति । चतुर्वेदाभिज्ञत्वे ब्राह्मणत्वं लिङ्गं विवक्षितमिति मत्वा[2]नेनानैकान्तो दर्शितः ॥

परिहरति —

तस्यापि पूर्ववन्निग्रहस्थानम् ॥

इति । अप्रतिपत्तिलक्षणमभिप्रायापरिज्ञानादुत्तरापरिज्ञानाद् वा । विप्रतिपत्तिश्च, विपरीतस्य हेतुत्वस्य परिज्ञानादिति ॥

चोदयति —

कस्मात् ॥

---

१. 'कान्त्यात्' ग. घ. पाठः. २. 'त्वा' घ. च. पाठः.

इति ॥

परिहरति —

हेतुत्वेनाविवक्षितत्वात् । किन्तर्हि, ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वमाश्चर्यकारणं न भवतीत्यभिप्रायः। सुक्षेत्रे शालिसम्पत्तिवत् ॥

इति । क्षत्रियादावेवाश्चर्यकारणम् । विद्याचारसम्पन्नः पुनर्ब्राह्मण इति सर्वोपि ब्राह्मणजातिः स्तूयते तत्र श्रद्धोत्पादनार्थमवज्ञापरिहारार्थं चेत्यर्थः ॥

उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलम् । मञ्चाः क्रोशन्तीत्युक्ते छलवाद्याह — पुरुषाः क्रोशन्ति न मञ्चाः, तेषामचेतनत्वादिति ॥

इति । क्षेत्रे पक्ष्यादिभ्यः शाल्यादिपरिरक्षणार्थं कृतः काष्ठसञ्चयश्चतुःस्तम्भरूपो मञ्चः ॥

तत्र छलवादिनो दूषणमाह —

तस्यापि पूर्ववन्निग्रहस्थानम्, उभयथापि लोके शास्त्रे च शब्दप्रयोगदर्शनादिति ॥

पराभिप्रायापरिज्ञानादुत्तरापरिज्ञानाद् वा अप्रतिपत्तिलक्षणं निग्रहस्थानम् । विप्रतिपत्तिर्वा परेणाविवक्षितस्य मुख्यार्थस्य स्वीकारेण दूषणात् । तस्मादुभयथापि मुख्यप्रकारेण गौणप्रकारेणापि लोके शास्त्रे च प्रयोगदर्शनात् । अतो गौणशब्दप्रयोगे परेण कृते मुख्यार्थस्य निषेधः स्वमनीषिकानिषेधो[2] न परोपालम्भ इति ॥

१. 'ऽमु', २. 'प्रतिषेधोऽसौ न' ग. पाठः.

जातिनिग्रहस्थानयोर्लक्षणमाह —

**प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसङ्गो जातिः । पराजयनिमित्तं निग्रहस्थानम् ॥**

इति । प्रसङ्गः प्रतिषेधः । स च प्रत्यक्षाभासादावस्ति, न चासौ जातिः । अतः प्रयुक्ते हेताविति पदम् । तथाप्यसिद्धत्वादिप्रसङ्गः प्रयुक्ते हेतौ भवति, तद्व्यवच्छेदाय समीकरणाभिप्रायेणेति पदम् । असिद्धत्वादिदूषणं तु परपक्षप्रतिषेधाय, नतु स्वपक्षस्य परपक्षेण समीकरणाभिप्रायेण । यद्यपि प्राप्त्यप्राप्तिसमादिष्वेतल्लक्षणं नास्ति, तेषां परपक्षसमीकरणाभिप्रायेणाप्रवृत्तेः । तथापि बाहुल्यापेक्षयेदं लक्षणं विवक्षितम् । स्वव्याघातकं दूषणं स्वव्याघातातिप्रसङ्गो जातिरिति तु निर्दिष्टम् ॥

सूत्रकारेणोक्तानामनुक्तानां चानयोर्भेदानां निरवशेषेणानभिधाने हेतुमाह —

**बहवश्चानयोः सूक्ष्मा भेदाः । तेषां कियन्तो भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्ते ॥**

इति । बहवोऽपरिसङ्ख्याताः । तेषामिति निर्धारणे षष्ठी । तेषां मध्ये इत्यर्थः ॥

**"साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ" (५. १. २) ॥**

---

१. 'चोद्यं तु' घ., 'चोदनं तु' ङ. पाठः.

इति । साधर्म्यवैधर्म्याभ्यामन्वयव्यतिरेकाभ्यामुपसंहारे । साध्यस्येति शेषः । तद्धर्मस्य साध्यधर्मस्यानित्यत्वादेः । विपर्ययो नित्यत्वादिः । तस्योपपत्तिः सिद्धिः । तदर्थं, तद्धर्मविपर्ययोपपत्तेरिति तादर्थ्ये षष्ठीविधानात् । साधर्म्यवैधर्म्याभ्यामेव च क्रियमाणौ प्रसङ्गौ साधर्म्यवैधर्म्यसमौ ॥

अनयोरुदाहरणमाह —

यथा अनित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते जातिवाद्याह — यद्यनित्यघटसाधर्म्यात्[1] कृतकत्वादनित्य इष्यते, तर्हि नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः प्राप्नोति । यदि च नित्याकाशवैधर्म्यात् कृतकत्वादनित्य इष्यते, घटाद्यनित्यवैधर्म्यादमूर्तत्वात् तर्हि नित्यः प्राप्नोति, विशेषाभावादिति अनयोरुत्तरम् ॥

इति । अत्रैवं विकल्पः — अमूर्तत्वं यथा नित्यत्वसाधनं न भवति तथा सर्वमपि साधर्म्यं वैधर्म्यं च साध्यसाधकं न भवतीत्युच्यते, किं वा कृतकत्ववत् सर्वमपि साधर्म्यं वैधर्म्यं च साध्यसाधकं[2] स्यादिति । आद्ये पक्षे जातेरनुत्थानं, तस्या अपि साधर्म्याद् वैधर्म्याद्वा समुत्थानात् ॥

द्वितीये पक्षे परिहारमाह —

अविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वाभ्युपगमादप्रसङ्गो धूमादिवत् ॥

इति । यथा अग्निमत्साधर्म्यादनग्निमद्वैधर्म्यादविनाभूताद् धूमादेवाग्निमत्त्वमेव सिध्यति, न पुनरग्निमत्साधर्म्ये-

---

१. 'दनि' ग. पाठः. २. 'साध' घ. पाठः.

मात्रादनभिमतद्वैधर्म्यमात्रादेकप्रदेशत्ववृक्षत्वादेरभिमतत्वं सिध्यति तथात्रेत्यर्थः । अविनाभाविन इत्यनेन पदेन विशेषभावोऽसिद्ध इति सूचयति ॥

**"साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षविकल्पसाध्यसमाः" (५. १. ४)** ॥

इति । साध्योऽत्र पक्षो विवक्षितः । साध्यदृष्टान्तयोः धर्मविकल्पादुत्कर्षापकर्षविकल्पसमाः । उभयसाध्यत्वाच्च साध्यसम इति सम्बन्धः । उत्कर्षापकर्षविकल्पशब्देषु भावे घञ् । साध्यशब्दे तु भावे कृत्यः । तदयमर्थः — पक्षदृष्टान्तयोर्धर्मस्य विकल्पाद् वैचित्र्याद् यदोत्कर्षं प्रसञ्जयति, तदोत्कर्षसमः । यदा चापकर्षं, तदापकर्षसमः । यदा साध्यदृष्टान्तयोर्धर्मस्य मूर्तत्वामूर्तत्वादेर्विकल्पान्नित्यत्वानित्यत्वविकल्पं प्रसञ्जयति, तदा विकल्पसमः । यदा च साध्यदृष्टान्तयोर्धर्मस्य विकल्पादुभयस्य साध्यत्वमपि प्रसज्येतेत्यभिधाय, ततो दृष्टान्तस्य साध्यत्वे को हेतुः को वा दृष्टान्त इति प्रसञ्जयति, तदा स प्रसङ्गः साध्यसमः । उभयसाध्यत्वाच्चेति चकारेण हि धर्मिविकल्पः समुच्चीयते । हेतुहेतुमद्भावेन च सम्बन्धः ॥

सूत्रं विवृणोति —

**साध्ये दृष्टान्तादनिष्टधर्मप्रसङ्ग उत्कर्षसमः** ॥

इति । दृष्टान्तात् सकाशात् साध्ये शब्दादावनिष्टस्याविद्यमानस्य धर्मस्य सावयवत्वादेः प्रसङ्गः परेणापाद्यमान उत्कर्षसमः ॥

---

१. 'तथा स.' ङ. च. पाठः.

**इष्टधर्मनिवृत्तिरपकर्षसमः ॥**

इति । परेणापाद्यमानेति शेषः ॥

अनयोः स्वरूपमाह —

**यदि कृतकत्वाद् घटवदनित्यः शब्दः, तदा घटवदेव सावयवः स्यात् । अथ नैवम्, अनित्योऽपि तर्हि न स्याद् अविशेषात् । अश्रावणो घटो दृष्टः । शब्दोऽपि श्रावणो न स्यादविशेषात् ॥**

इति । स्पष्टम् ॥

**अथ विकल्पसमः । कृतकत्वाविशेषेऽपि यथा मूर्तत्वामूर्तत्वादिधर्मविकल्पः, तथा नित्यत्वानित्यत्वविकल्पोऽपि स्यादविशेषात् ॥**

इति । साध्यदृष्टान्तयोः शब्दघटयोरिति वाक्यशेषः ॥

**अथ साध्यसमः । यदि कृतकत्वादुभयोरनित्यत्वं, तर्हि साध्यत्वमुभयोरपि स्यात् । न वा कस्यचिदविशेषादिति ॥**

ततश्च दृष्टान्तस्य साध्यत्वे को हेतुः, को वा दृष्टान्त इति प्रसङ्गः साध्यसम इति भावः ॥

**एतेषामुत्तरं — "किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः" (५. १. ५) ॥**

इति । किञ्चित्साधर्म्याद् ईषत्साधर्म्यात् । उपसंह्रियते यस्मिन् स उपसंहारो दृष्टान्तः । तस्य सिद्धेर्वैधर्म्यात् सर्वथा साधर्म्यादापाद्यमानादप्रतिषेधः । साध्यस्येति शेषः ।

अथवा, किञ्चित्साधर्म्याद्विनाभूतात् कृतकत्वादलक्षणात् । उपसंह्रियत इत्युपसंहारः साध्यम् । तस्यैव सिद्धेर्वैधर्म्याद्‌विनाभावशून्यादप्रतिषेधः साध्यस्य ॥

सूत्रार्थं संक्षेपेणाह —

**किञ्चित्साधर्म्याद् धूमवत्त्वादिलक्षणात् साध्यदृष्टान्तयोर्धर्मविकल्पेऽपि व्यवस्था दृष्टा । तदपलापे लोकादिविरोधः सर्वानुमानाप्रामाण्यप्रसङ्गश्चेति ॥**

इति । व्यवस्था वह्निमत्त्वस्यैव सिद्धिर्दृष्टा । न पुनः सर्वस्यापि दृष्टान्तधर्मस्य सिद्धिः । नापि तदसिद्धौ वह्निमत्त्वस्याप्यसिद्धिरिति ॥

जात्यन्तरमाह —

**"प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या अविशिष्टत्वादप्राप्त्या असाधकत्वाच्च प्राप्त्यप्राप्तिसमौ" (५. १. ७) ॥**

इति । साध्यं ज्ञाप्यं शब्दादिकार्यं च । तद्विषयं ज्ञानम् । हेतोरित्यस्यानन्तरं साधकत्वमङ्गीक्रियत इत्यध्याहारः । विकल्पस्त्वयं जात्युत्थाननिदाननिरूपणार्थः प्राप्त्या अविशिष्टत्वाद् अप्राप्त्या असाधकत्वाच्चेति । अत्र हेतुरसाधक इति । यौ प्रतिषेधौ तावित्यध्याहारः ॥

सूत्रार्थमाह[1]—

**यद्ययं हेतुः प्राप्य साध्य साधयेद्, उभयोः प्राप्त्यविशिष्टत्वादङ्गुल्योरिव किं कस्य साधनं साध्यं वा ॥**

---

१. 'रः । सूत्रा' ग. घ. पाठः.

इति । प्राप्तिः संयोगादिरूपा । तस्या अविशिष्टत्वं साधारणत्वम्[1] । तया वा अविशिष्टत्वं विद्यमानत्वम् । तस्मादप्राप्य साधकं नास्ति ॥

काष्ठादग्निवदिति ॥

इति । नहि काष्ठमप्राप्य वह्निर्दहति प्रकाशयति वेत्यर्थः ॥

परिहरति —

"घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः" (५. १. ८) ॥

इति । निष्पत्तिरुत्पत्तिर्ज्ञप्तिश्च[2] । पीडन इति निमित्तसप्तमी । पीडनार्थमभिचारदर्शनादित्यर्थः । प्राप्त्यविशेषेऽपि कुलालादिभिर्मृत्पिण्ड एव घटीक्रियमाणः प्रदीपादिना च प्रकाश्यमानो दृश्यते, न पुनर्विपर्ययः । तथात्रेत्यर्थः । तथा अप्राप्त्यविशेषेऽप्यभिचारकर्मणा पीडनं शत्रोः कुर्वन् दृश्यते, न विपर्ययः । तस्मादुभयथापि हेतुत्वोपपत्तेरयुक्तः प्रतिषेधः ॥

सूत्रस्य तात्पर्यार्थमाह —

प्राप्त्यप्राप्त्यविशेषेऽपि प्रतिनियतार्थवृत्तय एव चैते साध्यसाधनत्वादयो धर्मा दृष्टाः । ते निराकर्तुमशक्याः, सर्वप्रमाणविरोधादिति ॥

इति । किञ्चायं प्रसङ्गोऽपि हेतुं प्राप्तः प्रतिषेधत्य-

१. 'म् । प्रतियोगितया', २. 'त्तिराप्तिर्ज्ञ' ङ. पाठः.

प्राप्तो वेत्यादिदोषः समानः । ततः स्वेनैव स्वस्य दुष्टत्वे हेतुर्दुष्ट एव ॥

जात्यन्तरमाह —

"प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः" (५. १. १२) ॥

इति ॥

सोदाहरणमस्यार्थमाह —

अनित्यः शब्दः कार्यत्वादित्युक्ते प्रागुत्पत्तेरनित्यत्वकारणं नास्तीति नित्यः प्रसक्तः । तस्योत्पत्तिरनुपपन्नेति ॥

इति । अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥

परिहरति—

"तथाभावादुत्पन्नस्य कारणोपपत्तेरप्रतिषेधः" (५. १. १३) ॥

इति । उत्पन्नस्य शब्दस्य तथाभावादुत्पत्तिसम्भवात् कारणोपपत्तेरनित्यत्वसाधकहेतूपपत्तेरप्रतिषेधः । अन्यथा प्रतिवादिवचनात् प्रागदुष्टो हेतुः, हेतावदुष्टे दूषणानुपपत्तेरिति जातिप्रयोगव्याघातः ॥

तात्पर्यार्थमाह—

अनुत्पन्नः शब्द एव नास्ति । कस्य नित्यत्वादिधर्मश्चिन्त्यते ॥

इति । आदिशब्दादनित्यत्वपरिग्रहः ॥

---

१,२. 'ह' च. पाठः. ३. 'तुरदुष्टे' ग. क. पाठः. ४. 'स्यासत्त्वम् ॥' ग. पाठः.

जात्यन्तरमाह —

"त्रैकाल्यासिद्धेर्हेतोरहेतुसमः" (५. १. १८) ॥

इति । त्रैकाल्ये असिद्धिरिति विग्रहः ॥

एतदेव विवृणोति—

**यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम् । अथ पश्चात्, अविद्यमानं कथं साधनम् । अथ युगपत्, किं कस्य साधनं साध्यं वा । द्वयोस्तुल्यकालत्वादिति ॥**

इति । अविद्यमानमिति । साध्यकाले इति शेषः । हेतोरहेतुत्वापादनाय प्रतिषेधोऽहेतुसमः ॥

परिहरति —

"न । हेतुतः साध्यसिद्धेः" (५. १. १९) ॥

इति । साध्यस्य कार्यस्य ज्ञाप्यस्य च । हेतुत एव सिद्धेरुत्पत्तेर्ज्ञप्तेश्च लोके शास्त्रे च दर्शनाद् अयुक्तः प्रतिषेधः । यदि पुनर्हेतुतः साध्यसिद्धिर्नाङ्गीक्रियते, तदा प्रवृत्तिनिवृत्तिभ्यामपि कस्यचिदर्थस्यासाधनात् तयोर्वैयर्थ्यप्रसङ्गः ॥

एतदेवाह —

**प्रवृत्त्यादिविरोधः सूत्रार्थः ॥**

इति ॥

इतोऽपि ज्ञापकहेतुप्रतिषेधो नोपपद्यत इत्याह —

"प्रतिषेधानुपपत्तिश्च त्रैकाल्यासिद्धेः" (५. १. २०) ॥

इति । योऽयं परेण प्रतिषेधः क्रियते, स किं प्रतिषेध्यात् पूर्वम्, उत पश्चाद्, अथ युगपत् । यदि पूर्वम्, असति

१. 'त्' ग. पाठः.

प्रतिषेध्ये कस्यायं प्रतिषेधः स्यात् । अथ पश्चात्, असति प्रतिषेधे कथं प्रतिषेध्यम् । युगपच्चेत्, सव्येतरविषाणयोरिव किं कस्य प्रतिषेधकं प्रतिषेध्यं वा स्याद्, एककालत्वाविशेषात् ॥

नन्वेवमस्यापि प्रतिषेधस्य त्रैकाल्यासिद्धिरिति[1] दूषणे सत्यनवस्थायां कस्यापि सिद्धिर्न स्यादित्याशङ्क्याह —

स्ववचनेनैव प्रतिषेधासिद्धौ हेतुसिद्धिरिति सूत्रार्थः ॥

इति । स्वरूपनाशकत्वादयं दोष एव न भवतीति भावः । एतेन सर्वोऽप्ययं साधर्म्यवैधर्म्यादिजातिप्रयोगः स्वरूपमपि व्याप्नोति । तच्च शिष्यैरूहनीयमिति सूचयति ॥

जात्यन्तरमाह

"एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः" (५. १. २३) ॥

इति ॥

एतद् विवृणोति —

यदि घटशब्दयोरेकधर्मत्वस्य[2] कार्यत्वस्योपपत्तेरनित्यत्वेनाविशेष इष्यते, सर्वभावानां तर्हि सद्भावोपपत्तेरविशेषः प्रसज्यत इति ॥

इति । अविशेषार्थः प्रसङ्गोऽविशेषसमः ॥

परिहरति —

तत्रेदमुच्यते— सर्वथा अविशेषे प्रत्यक्षादिविरोधः । अनित्यत्वेनाविशेषेऽनुमानागमविरोधः । केनचिदविशेषे प्रमेयत्वादिना सिद्धसाधनमिति ॥

---

१. 'द्धे' ङ. पाठः. २. 'कस्य' ग. पाठः.

इति । सर्वथा अविशेषे प्रतिषेधानुपपत्तिश्च, प्रतिषेध्यप्रतिषेधकभेदासिद्धेरित्यूह्यम् । आत्मादिर्नित्यः, अनादिवस्तुत्वात् । यन्नित्यं न भवति तदनादिवस्तु न भवति यथा घटादीत्यनुमानम् । 'अविनाशी वा अरे अयमात्मे'त्यागमः । ताभ्यां विरोधः ॥

जात्यन्तरमाह —

"निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः" (५. १. २७) ॥

इति । हेतुरयुक्त इति प्रतिषेध इति शेषः ॥

सूत्रं विवृणोति —

पृथिव्यादिषु कार्यत्वासिद्धये निर्दिष्टस्य सावयवत्वस्याभावेऽपि बुद्ध्यादौ कार्यत्वमुपलब्धमित्यतोऽप्रयोजकोऽयं हेतुः ॥

इति । उपलब्ध्या प्रतिषेध उपलब्धिसम इत्यर्थः ॥

परिहरति —

सपक्षैकदेशस्यापि धूमादेर्गमकत्वदर्शनादप्रतिषेधः ॥

इति । सपक्षैकदेशे वर्तमानो हेतुरत्र सपक्षैकदेश इत्युक्तः, उपचाराद्, मञ्चशब्देन पुरुषवत् । सपक्षस्यैकदेशो यस्यासौ सपक्षैकदेश इति भिन्नाधिकरणो वा बहुव्रीहिः । अथ सपक्षव्यापके हेत्वन्तरे सत्यव्यापकस्याप्रयोजकत्वं, नोऽव्यापकमात्रस्य धूमादेः । इह त्वभूत्वाभावित्वस्य सपक्षव्यापकस्य प्रयोजकत्वात् सावयवत्वमप्रयोजकमिति । तदप्ययु-

१. 'रगमकत्वाद', २. 'न' ग. पाठः.

क्तम् । द्रव्यत्वसाधने सपक्षव्यापकस्य गुणवत्त्वस्य समवायिकारणत्वस्य वा सद्भावेऽपि वायोः क्रियावत्त्वादेव द्रव्यत्वसिद्धेः । नापि कार्यत्वे अभूत्वाभावित्वं प्रयोजकमिव वाच्यं, तयोः पर्यायत्वात् ॥

इदानीमाशङ्कापूर्वकं सूत्रोक्तं परिहारमाह —

**कथं तर्हि बुद्ध्यादेः कार्यत्वसिद्धिरित्यत आह— "कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः" (५. १. २८)॥**

इति ॥

तद् व्याचष्टे —

**प्रमाणान्तरादपि कार्यत्वसिद्धेरित्यर्थः ॥**

इति । यथा धूमाभावेऽप्ययोगोलकादौ प्रमाणान्तरादग्निसिद्धिस्तथेत्यर्थः ॥

प्रमाणान्तरमेव दर्शयति —

**प्रमाणं चानुपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं चानुपलम्भादिति ॥**

इति । तथाहि बुद्ध्यादिकं कार्यम्, उपलब्धिकारणेष्वसत्सु प्रागूर्ध्वं चानुपलभ्यमानत्वाद् घटादिवत्[1] । येष्वावरणादिषु सत्सु बुद्धिघटादयो विद्यमाना अपि नोपलभ्यन्ते, तान्यनुपलब्धिकारणादीन्युच्यन्ते ॥

अस्मिन्ननुमाने जात्यन्तरं सौत्रं दर्शयति —

**"तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः" (५. १. २९) ॥**

---

१. 'भ्यमानत्वाद् घटवदि' ग. घ. पाठः.

इति। तद्विपरीतोपपत्तेरित्यस्मादसिद्धो हेतुरिति[1] प्रतिषेध इत्यध्याहारः ॥

सूत्रं व्याचष्टे —

**तस्य बुद्ध्यादिकार्यत्वस्यानुपलब्धेरनुपलम्भादभावसिद्धावनुपलब्धिविपरीतोपलब्ध्युपपत्तेः प्रागूर्ध्वमपि बुद्ध्यादेः सद्भावः सेत्स्यतीत्यभिप्रायः ॥**

इति । अनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसम इति । उपलभ्यमानत्वे चोपलब्धिरेव स्यान्नानुपलब्धिरिति भावः ॥

परस्योत्तरमाह—

"अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः" (५.१.३०)॥

इति । अनुपलब्धेरनुपलम्भात्मकत्वादनुपलम्भ[2]रूपेण प्रतीयमानत्वादहेतुः। बुद्ध्याद्यनुपलब्धेरभाव[3]साधिकाया अनुपलब्धेः स्वयमविद्यमानत्वादिति भावः ॥

अमुमेवार्थमाह —

**नास्तीति ज्ञानमनुपलब्धिः । सा तत्स्वभावतया प्रत्यात्मवेद्या । अतस्तदनुपलब्धिरसिद्धेत्यभिप्रायः ॥**

इति। यदाप्युपलब्ध्यभावोऽनुपलब्धिः, तदापि तस्याः प्रत्यात्मवेद्यत्वादनुपलब्धेरनुपलब्धिरसिद्धा। तथाहि — शास्त्रज्ञानं मम पूर्वं नास्ति, इदानीं वा नास्ति, शास्त्रज्ञानं मयि

१. 'रित्य' ग. पाठः. २. 'म्भस्वरू' ख. च. पाठः. ३. 'वसिद्धे कानुपलब्धिरित्यर्थः ॥ अमु' ग. पाठः.

नोपलभ्यते इत्यनुपलब्धिरूपेण ज्ञायत एव। एतेनोपलभ्यमानत्वादुपलब्धिः स्यादित्येतत् प्रत्युक्तम्। विधिमुखेनोपलब्धिर्यथा प्रतीयते तथानुपलब्धेः प्रतीत्यभावात् । किञ्च परवचनस्य स्वरूपाप्रतिषेधात्मकत्वे[1] हेतुरप्रतिषिद्धः स्यात् । स्वरूपप्रतिषेधकत्वे वा स्वयमेव न स्यादित्यलम् ॥

"नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः" (५.१.३५) ॥

इति ॥

अस्यार्थमाह —

अनित्यत्वधर्मस्य नित्यं सर्वदा सद्भावाद् धर्मिणोऽपि शब्दस्य सर्वदा सद्भावप्रसङ्गः । अथानित्यत्वं सर्वदा नास्ति, तथाप्यनित्यत्वाभावान्नित्यः शब्द इति ॥

इति । धर्मिणोऽपि शब्दस्य सर्वदा सद्भाव इति । धर्मिणमन्तरेण धर्मस्यावस्थानायोगादिति भावः । नित्यत्वस्य प्रसङ्गो नित्यसमः ॥

परिहरति —

अनित्यत्वस्य सदाभ्युपगमान्नित्यत्वविरोधः । अनभ्युपगमे चासिद्धो हेतुः ॥

इति । नित्यमनित्यत्वस्य भावादित्ययमसिद्ध इत्यर्थः ॥

---

१. 'त्वेनाप्रतिषेधात्मकत्वे हे' ङ. पाठः.

यत्तु धर्मस्यावस्थानाद् धर्मिणोऽप्यवस्थानप्रसङ्ग इति दूषणं, तत्राह—

**प्रध्वंसश्चानित्यत्वम् । नच तस्मिन् सति शब्द-सद्भाव इति ॥**

भावात्मको हि धर्मो निराश्रयो न सम्भवति, न त्वभावात्मक इति भावः ॥

ननु सूत्रकारोक्तानामनुक्तानां च जातीनामन्यासां विद्यमानानामिह कस्मादनभिधानमित्याशङ्क्याह —

**एतेनान्यत्वस्यात्मनोऽनन्यत्वादन्यत्वं नास्ति इत्यादीन्यसदुत्तराणि प्रत्युक्तानि ॥**

इति । एतेन कतिपयजातीनां स्वरूपदर्शनपरिहाराभिधानेन । प्रत्युक्तानि तत्समानेन्यायतयेति भावः । यदिदमन्यदित्युच्यते तत् स्वरूपादन्यद्, उतानन्यत् । यदि स्वरूपादन्यत्, तदात्महा[२]नादसदेव स्यात् । अथानन्यत्, तदाप्यनन्यत्वादेवान्यन्न भवतीत्यन्यताया अभाव इति इयमनन्यसमा जातिः ॥

कथमियं निराकृतेत्यत्राह —

**निमित्तान्तरात् संज्ञान्तरे योज्यमानेऽप्यर्थतथाभावस्य निराकर्तुमशक्यत्वात् ॥**

इति । निमित्तान्तरात् स्वरूपापेक्षया भेदाभावलक्षणात् । संज्ञान्तरेऽनन्यशब्दे योज्यमाने परेणापाद्यमानेऽप्यर्थतथाभावस्य वस्त्वन्तरापेक्षयान्यशब्दवाच्यत्वस्य निराकर्तुमशक्यत्वात् । यदि वा घटादौ निमित्तान्तरात् पदार्थान्त-

१. 'नत', २. 'भा' ग. पाठः.

रापेक्षया भेदलक्षणात् संज्ञान्तरेऽन्यशब्दे योज्यमानेऽर्थतथाभावस्य स्वरूपापेक्षया भेदशून्यत्वेनानन्यशब्दवाच्यत्वस्य निराकर्तुमशक्यत्वात् पुत्रादिवदित्यर्थः ॥

ननु तथापि वचनप्रवृत्त्या संग्रहे जात्यन्तराणि सर्वाणि कस्मान्नोक्तानीत्यत आह —

आनन्त्यान्न सर्वाणि जात्युत्तराण्युदाहर्तुं शक्यन्ते, सूत्राणामप्युदाहरणार्थत्वादिति ॥

इति । सूत्राणामुदाहरणार्थत्वं चतुर्विंशतिजातिव्यतिरिक्तजात्यन्तरेणाप्यनन्यसमादिना स्थानान्तरे सूत्रकारेण प्रत्यवस्थानकरणाद् विज्ञायते ॥

उपसंहरति —

उक्ता जातिभेदाः ॥

इति ॥

अथेदानीं निग्रहस्थानान्युच्यन्ते । तान्यपि विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पानन्त्यादसङ्ख्यातानीत्यतः संक्षेपतो व्युत्पाद्यन्ते ॥

इति । सूत्रोक्तानि द्वाविंशतिर्निग्रहस्थानान्येव लक्षणोदाहरणाभ्यां प्रदर्श्यन्त इत्यर्थः ॥

तथाच सूत्रम् —

"प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थ-

---

१. 'त्याद' ख. ङ. पाठः.

मपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषण-मज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रह-स्थानानि" (५. २. १) इति ॥

सूत्रे वाक्यात्मकानामपि कियतां विप्रतिपत्त्यप्रति-पत्तिसूचकत्वेन पराजयनिमित्तत्वान्निग्रहस्थानत्वमुक्तम्। अ-समासकरणमन्योन्यनिरपेक्षाणामेवैषां स्वकार्यकरणसामर्थ्य-प्रकटनार्थम् ॥

सूत्रक्रमेण लक्षणमाह —

"साध्ये प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिः" (५. २. २) ॥

अस्या उदाहरणमाह —

यदि कृतकत्वादनित्यः शब्द इष्यते, तर्ह्याकाश-वदमूर्तत्वान्नित्यः किं नेष्यते इति प्रतिवादिनोक्ते वाद्याह—भवतु किं नो बाध्यते इति। तस्य नित्य-त्वाभ्युपगमेनानित्यत्वप्रतिज्ञा हीयेत इत्यतः प्रतिज्ञा-हानिर्नाम निग्रहस्थानं भवति इति ॥

उपलक्षणमेतत्। तेन हेतुहान्यादीनामपि सङ्ग्रहः। तथाहि—अनित्यः शब्दः प्रमेयत्वादित्यस्य हेतोरनैकान्ति-कत्वेन प्रतिषेधे कृते, सत्यम्, अस्तु तर्हि कृतकत्वादिति ब्रुवतो हेतुहानिः। अनित्ये वाङ्मनसे कार्यत्वादित्यस्य भागा-सिद्ध्या प्रतिषेधे वागेव तर्हि पक्षीक्रियत इति वदतः पक्ष-

---

१. 'काशना' ङ. पाठः.

हानिः । एवं प्रतिज्ञाविशेषणहान्यादयोऽस्माभिर्भूषणभूषणेऽभिहितास्तत्रैव ज्ञातव्याः ॥

"प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम्" (५. २. ३) ॥

इति[1] ॥

लक्षणसूत्रमुदाहरणप्रदर्शनद्वारेण व्याचष्टे—

सर्वमनित्यं सत्त्वादित्यत्र दृष्टान्ताभावेन प्रतिज्ञातार्थप्रतिषेधे धर्मो विवादास्पदीभूतत्वादिलक्षणः । तस्य विकल्पः प्रतिज्ञातार्थविशेषणत्वेन योजनम् । तदर्थ इति प्रतिषेधनिवृत्त्यर्थः, यथा मशकार्थो धूम इति निर्देशः । विवादास्पदीभूतं सर्वमनित्यमित्येतत् प्रतिज्ञान्तरं निग्रहस्थानं हेत्वन्तरवदिति ॥

दृष्टान्ताभावेन असाधारणत्वेनेत्यर्थः । प्रतिषेधनिवृत्त्यर्थ इति । एतेन तच्छब्दः प्रतिषेधपरामर्शी, अर्थशब्दश्च निवृत्तिगर्भ[2]प्रयोजनवाचीति सूचितम् । ननु निर्विशेषणप्रतिज्ञायाः प्रहाणात् प्रतिज्ञाहानितोऽस्य को विशेषः । न । स्वरूपमात्रापरित्यागात्, तस्यैव विशेषणान्तरेण समर्थयितुं प्रवृत्तत्वात् ॥

"प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः" (५. २. ४) ॥

यथा गुणव्यतिरिक्तं द्रव्यं, भेदेनानुपलम्भादिति ॥

इति । न च वक्तव्यं विरुद्धहेत्वाभास एवायं[3] न पृथग्वाच्य इति । व्याप्तिस्मरणवशाद् विरुद्धहेत्वाभासे विरोधा-

१. 'ति । सू' ग. पाठः. २. 'गर्भितप्र' घ. ङ. च. पाठः. ३. 'विरुद्धाव' ख. पाठः.

वगमः, इह तु प्रतिज्ञाहेतुवचनश्रवणमात्रादिति इयता भेदेन पृथगभिधानम् ॥

"पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः" (५. २. ५)। अनुष्णोऽयमग्निरित्यस्य प्रतिषेधे[1] वाद्याह —सम्पश्यध्वमहो मध्यस्थाः साक्षिणः। नाहमनुष्णमग्निं ब्रवीमि, अनुक्तोपालम्भोऽयमित्येतत् तस्य प्रतिज्ञासंन्यासलक्षणं निग्रहस्थानमिति ॥

इति। अत्र पक्षप्रतिज्ञाशब्दयोरुपलक्षणे[2]परत्वाद्धेत्वादिसन्न्यासा अपि निग्रहहेतवो वेदितव्याः। यथा नित्यः शब्दः प्रमेयत्वादित्यस्यानैकान्तिकत्वेन प्रतिषेधे कृते नाहं नित्यत्वे प्रमेयत्वं हेतुं ब्रवीमीति ब्रुवाणस्य हेतुसंन्यास इत्यादि। 'समो गम्यृच्छिप्रच्छि—' इत्यादिसूत्रे 'दृशेश्चेति वक्तव्यमि'त्यनेन सम्पश्यध्वमित्यात्मनेपदम् ॥

"अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्" (५. २. ६) ॥

इति। विशेष्यते येन स विशेषो विशेषणम्। न विद्यते विशेषो यस्यासावविशेषः। स चासावुक्तश्चेत्यविशेषोक्तः तस्मिन्। हेतुशब्दः परार्थानुमानवाक्यगतसाधनभागोपलक्षकः। वचनशब्दस्य चाध्याहारः। तेनादावविशिष्टं साधनभागमभिधाय तद्दूषणे च परेणोद्भाविते पश्चाद् विशिष्टं तमभिदधतो वचनं हेत्वन्तरमित्यर्थः ॥

---

१. 'धार्थमाह', २. 'णत्वा' ग. पाठः.

अस्योदाहरणमाह —

**यथा नित्या वेदाः, अस्मर्यमाणकर्तृकत्वादित्यस्य जीर्णकूपारामादिभिरनैकान्तिकत्वेन प्रतिषेधे कृते सम्प्रदायाविच्छेदे सतीति विशेषणमिच्छतो हेत्वन्तरम् ॥**

इति । निग्रहस्थानं भवतीति शेषः ॥

कथमित्याशङ्कयाह —

**पूर्वस्यासाधकस्योपादानादिति ॥**

इति । ननु प्रतिज्ञाहान्या हेतुहान्यादीनामुपलक्षणवत् प्रतिज्ञान्तरेण हेत्वन्तरस्याप्युपलक्षणं भविष्यति । किमस्य पृथगुपादानेन । अन्यथोदाहरणान्तरादीनामपि पृथगभिधानप्रसङ्गः । यथा — गुणः शब्दः सामान्यवत्त्वास्पर्शवत्त्वे सत्यस्मदादिबाह्यैकेन्द्रियग्राह्यत्वाद् रूपादिवद् इत्यत्र रूपमात्रस्यास्मदादिप्रत्यक्षत्वाभावात् साधनविकलत्वेन दृष्टान्ते दूषिते पटरूपवदिति वदत उदाहरणान्तरम् । तथोपनयान्तरं निगमनान्तरमप्युदाहरणीयम् । सत्यम् । तथापि परार्थानुमानवाक्यस्य साध्यसाधनभागरूपतया तद्भेदविवक्षया पृथगभिधानम् । तेनात्र प्रतिज्ञान्तरं निगमनान्तरं च प्रतिज्ञान्तरशब्देन गृह्यते । हेत्वन्तरमुदाहरणान्तरमुपनयान्तरं हेत्वन्तरग्रहणेन गृह्यत इति ॥

**"प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् " (५.२.७) ॥**

---

१. 'नरू', २. 'रं च हे' ग. पाठः.

इति। अत्रान्यदित्यध्याहार्यम्। अर्थान्तरमिति लक्ष्यपदमेव वा लक्षणेऽप्यावृत्त्या सम्बन्धनीयम्। तेन प्रकृतात् प्रस्तुतादर्थात् साध्यसाधनात् तद्दूषणाद् वा यदर्थान्तरं प्रकृतेनासंबद्धार्थमनुपयोगि, तदर्थान्तरं नाम निग्रहस्थानमित्यर्थः॥

एतदेव सादाहरणमाह

**यथा नित्यः शब्दोऽस्पर्शवत्त्वादिति हेतुः। हेतुश्च हिनोतेर्धातोस्तुन्प्रत्यये सति कृदन्तं पदमित्यादि प्रसक्तानुप्रसक्त्या प्रकृतार्थानुपयोगि शास्त्रान्तरमुपदिशतोऽर्थान्तरं नाम निग्रहस्थानम्॥**

इति। अस्पर्शवत्त्वादिति हेतुमज्ञानात् प्रयुज्यानन्तरमेवानैकान्तिकत्वं स्वयमेव जानानस्तदाच्छादनार्थमेवं प्रवर्तत इति भावः॥

**"वर्णक्रमनिर्देशवन्निरर्थकम्" (५. २. ८)। यथा नित्यः शब्दः कचटतपानां जबगडदशत्वात् झभघढधष्वदिति॥**

इति। वर्णक्रमनिर्देशो वर्णानां पाठक्रमः अ आ इ ई इत्यादिः, स इव तद्वत्। तत्सादृश्यं चार्थशून्यत्वम्। यत्र पदार्थोऽपि नास्ति तन्निरर्थकम्। वर्णक्रमनिर्देश एवास्ति न पुनरर्थो यत्र तद् वर्णक्रमनिर्देशवदिति। मत्वर्थीयो वा॥

**"परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्" (५.२.९)। यद् वाक्यं वादिना त्रिरभिहित-**

---

१. 'तादर्थात्' ग. पाठः.

मप्यप्रतीतप्रयोगातिद्रुतोच्चारणादिना निमित्तेन परिषत्प्रतिवादिभ्यां न ज्ञायते, तदज्ञानसंवरणायोक्तमविज्ञातार्थं नाम निग्रहस्थानमिति ॥

इति । न ज्ञायत इति । विद्यमानार्थमेवार्थतो न ज्ञायत इत्यर्थः । न पुनः स्वरूपतः ॥

"पौर्वापर्यायोगादप्रतिसम्बन्धार्थमपार्थकम्" (५. २. १०) ॥

इति । पूर्वं विशेषणम् । अपरं विशेष्यम् । तयोर्भावः पौर्वापर्यं विशेषणविशेष्यभावः । तेनायोगोऽसम्बन्धः । तस्मात् कारणादप्रतिसम्बन्धोऽनन्वितोऽर्थो यस्य तदप्रतिसम्बन्धार्थम् ॥

तत्र वाक्ययोरनन्वितत्वे उदाहरणमाह –

यथा दश दाडिमानि षडपूपाः ॥

इति ॥

पदयोरनन्वितत्वे निदर्शनमाह —

कुण्डमजाजिनमित्येवमादि ॥

इति ॥

"अवयवविपर्यासवचनमप्राप्तकालम्" (५.२.११) ॥

इति । विपर्यासेन व्यत्यासेन वचनं विपर्यासवचनम् । अवयवानां विपर्यासवचनमवयवविपर्यासवचनम् ॥

सूत्रस्यार्थमाह —

प्रतिज्ञादीनामर्थवशात् क्रमः । तेषां विपर्ययेणाभिधानं निग्रहस्थानम् ॥

१. 'त्ययेन' ग, घ, ङ, च, पाठः.

इति । स्पष्टम् । एतच्च नियमकथायां निग्रहस्थानम् । अनियमकथायां तु न विरोधः ॥

**"हीनमन्यतमेनाप्यवयवेन न्यूनम्"(५. २. १२) ॥**

**साधनाभावे साध्यासिद्धेरयोगात् ॥**

इति । व्यक्तमेतत् ॥

**"हेतूदाहरणाधिकमधिकम्" (५. २. १३) ॥**

इति । हेतूदाहरणग्रहणं सर्वस्याधिकस्योपलक्षणम् ॥

अस्य निग्रहस्थानत्वे कारणमाह —

**एकेन कृतत्वादितरानर्थक्यादिति ॥**

इति । एक एव हेतुः दृष्टान्तो वा मयोच्यते इति नियमपूर्विकायां कथायामेव दूषणं, न सर्वत्र । असम्प्लववादिनां तु सर्वदा । एतच्च न्यूनाधिकलक्षणं द्वयमपि स्वमताभ्युपगतावयवापेक्षया न्यूनत्वे चाधिकत्वे च दूषणं विज्ञेयम् ॥

पुनरुक्तलक्षणमाह —

**"शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्" (५. २. १४) ॥**

इति ॥

एतद् व्याचष्टे —

**सार्थकं पुनरभिधानमनुवादः । तद्व्यतिरेकेण पुनरभिधानं पुनरुक्तम् । नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम् । नित्यो ध्वनिः अविनाशी शब्द इत्यर्थपुनरुक्तम् ॥**

इति । सार्थकं पुनरभिधानं यथा गौर्गौः कामदुघेत्यादि ॥

पुनरुक्तान्तरमाह

"अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम्" (५. २. १६) । यथा साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणाभिधानमिति ॥

इति । व्याप्तिख्यापनार्थं ह्युदाहरणमुच्यते । तच्चैकेनाप्युदाहरणेनालम् इति व्यर्थमुभयाभिधानम् । यथा — यद्यत् कृतकं तत् तदनित्यं यथा घटादीत्यभिधाय यदनित्यं न भवति तत् कृतकमपि न भवति यथा गगनमिति । अन्वयव्यतिरेकित्वज्ञापनार्थमुभयाभिधानमिति चेद्, नैवम् । तज्ज्ञापनेन प्रयोजनाभावाद्, व्याप्तिप्रतीत्यैवानुमानप्रसिद्धेश्च ॥

चोदयति —

कथं तन्निग्रहस्थानमिति ॥

तत् पुनरुक्तमात्रम् ॥

परिहरति —

कथावसानविरोधित्वादेकेन कृतत्वादितरानर्थक्यादिति ॥

उक्तस्यापि पुनरभिधानेऽनवस्था वैयर्थ्यं चेत्यर्थः । एतदपि नियमकथायामेव निग्रहस्थानम् । अनियमकथायां तु साक्षिप्रतिपक्षिणोरुपेक्षायां सत्यां स्पष्टार्थं पुनरभिधानेऽपि विरोधाभावात् त्रिरभिधाननियमाच्च नातिप्रसङ्गः । तथाप्यधिकान्नेदं भिद्यत इति चेत् । सत्यम् । पुनरुक्तरूपमप्यधिकं

१. 'न कृतम्' घ. ङ. च. पाठः.

दर्शितमेव । अधिकात् तु कियता भेदेन पुनरुक्तं पृथगुक्तं शिष्यव्युत्पादनार्थमित्यदोषः ॥

"विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्" (५. २. १७) प्रतिवादिनो निग्रहस्थानम् ॥

इति । उपलक्षणमेतत् । प्रतिवादिना प्रतिपादितदूषणस्याननुभाषणे वादिनोऽपि निग्रहस्थानसम्भवात् ॥[1]

कथमेतन्निग्रहस्थानमित्याशङ्क्याह —

अप्रत्युच्चारयन् किमाश्रयः परपक्षप्रतिषेधं ब्रूयादिति ॥

क आश्रयो विषयो यस्य असौ किमाश्रयः । एतेन दूष्यमात्रानुवादेऽप्यसमर्थस्यैतद् दूषणमिति सूचितं, न पुनः सर्वानुवादः कर्तव्य इति । त्रिरभिहितस्येत्येतदपि परिषदभ्युपगमस्योपलक्षणम् । यावत् प्राश्निका अन्यतरस्यासामर्थ्यं निश्चिन्वन्ति तावद् वक्तव्यमिति भावः ॥

"अविज्ञातार्थं चाज्ञानम्" (५. २. १८) ॥

चकारेण पूर्वसूत्राद् विज्ञातस्य तस्य परिषदा त्रिरभिहितस्यापीत्येतदाकृष्यते ॥

तदेवाह —

यद्[2] वाक्यं त्रिरभिहितमपि परिषदावगतार्थं प्रतिवादी प्रत्युच्चारयन्नपि नार्थतः सम्यगधिगच्छति तदज्ञानं नाम प्रतिवादिनो निग्रहस्थानम् ॥

---

१. 'नभावात्' घ. पाठः. २. 'च्च' घ. च. पाठः.

इति । अत्रापि प्रतिवादिग्रहणमुपलक्षणम् ॥

**कथामभ्युपगम्य तूष्णीम्भावोऽप्रतिभा वादिप्रतिवादिनोर्निग्रहस्थानमिति ॥**

इति । अननुभाषणे न तूष्णीमास्ते, किन्तु[1] अप्रत्युच्चारयन्नपि दूषणादिकमभिदधाति । अतो नानयोरभेदः ॥

"कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः" (५. २. २०) ॥

इति ॥

अस्यार्थमाह —

**कथामभ्युपगम्य सभ्येषु सम्मिलितेषु ब्रवीति—अद्य मे महत् प्रयोजनं विद्यते, तस्मिन्नवसिते पश्चात् कथयिष्यामीति ॥**

इति । यदि पुनस्तदानीमेवोत्पन्नं महत् प्रयोजनं सभ्या अप्यभ्युपगच्छन्ति, तदा तद्वशेन[2] कथां विच्छिन्दतोऽपि न पराजयः। न चेदमर्थान्तरेऽन्तर्भवतीति वाच्यम् । हेतुप्रयोगानन्तरं तदनुपयोगिवचनं ह्यर्थान्तरम् । अत्र तु हेतूपन्यासमपि पश्चात् करिष्यामीति वदति । अतोऽस्ति भेदः ॥

"स्वपक्षे[3]दोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा" (५. २. २१) ॥

इति । स्वपक्षोऽत्र सिद्धान्तो विवक्षितः, न पुनः सिसाधयिषितधर्मविशिष्टधर्मिमात्रम् । अभ्युपगमोऽपरिहरणम् ।

१. 'न्तु प्र' ग. पाठः. २. 'तदाशयेन' घ. पाठः. ३. 'क्षे' घ. ङ. च. पाठः.

तेन स्वसिद्धान्ते परोक्तं दूषणमपरिहृत्य परसिद्धान्ते दोष-प्रसञ्जनं मतानुज्ञेत्यर्थः ॥

तदेवाह —

**यः स्वपक्षे मनागपि दोषं न परिहरति, केवलं परपक्षे दोषं प्रसञ्जयति, भवांश्चोर इत्युक्ते त्वमपि चोर इति । तस्येदं निग्रहस्थानम् ॥**

इति ॥

कस्मादित्याशङ्कयाह —

**स्वयं दोषाभ्युपगमात् परेणानभ्युपगमादिति ॥**

इति । 'अप्रातिषिद्धमनुमतं भवती'ति न्यायेनेति भावः ॥

**"निग्रह(स्थानं प्रा)तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्" (५. २. २२) ॥**

इति ॥

एतद् व्याचष्टे —

**पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः । तस्योपेक्षणं निग्रहं प्राप्तोऽसीत्यननुयोगः ॥**

इति । एतच्च निग्रहस्थानं कतमस्यात्र पराजय इति पृष्टया परिषदोद्भावनीयं, निग्रहं प्राप्तस्य स्वदोषोद्भावनानुपपत्तेः ॥

**"अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः" (५. २. २३) ॥**

इति । अदोषे दोषोद्भावनमित्यर्थः[2] ॥

१. 'र', २. 'दोषभाव' घ. पाठः.

एतदेवोदाहरति —

**यथा सावयवत्वेन पृथिव्यादौ कार्यत्वसाधने परो ब्रूयादप्रयोजकोऽयं हेत्वाभास इति । तस्येदं[1] मिथ्याभियोगलक्षणं निग्रहस्थानम् ॥**

इति । द्रव्यत्वे सति द्रव्याश्रितत्वं सावयवत्वम् । न चास्य कार्यत्वस्य साधनेऽसिद्धत्वाद्यन्यतमदूषणमस्ति । बुद्ध्यादौ सावयवत्वाभावेऽपि कार्यत्वोपलम्भाद् व्याप्त्यभावेनाप्रयोजकत्वमिति[2] चेत् । न । सपक्षैकदेशवृत्तेर्धूमादेरप्यप्रयोजकत्वप्रसङ्गात् । अथ सपक्षव्यापकहेत्वन्तरसद्भावे सत्यव्यापकस्य हेतोरप्रयोजकत्वं, नाव्यापकमात्रस्य धूमादेः । अत्र तु कादाचित्कत्वं सकलकार्यव्यापकं प्रयोजकं, न सावयवत्वमिति चेत् । न । कार्यत्वकादाचित्कत्वयोः पर्यायत्वात् । किञ्च व्यापकस्येवाव्यापकस्याप्यसिद्धत्वादिदोषरहितत्वेन प्रयोजकत्वं केन वार्यत इत्यलम् ॥

**"सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः" (५. २. २४)। यथा मीमांसामभ्युपेत्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह । कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गसाधिका भवतीत्यनुयुक्तः प्राह — तया क्रियया आराधितः परमेश्वरः फलं ददाति राजादिवदिति । तस्येश्वरानभ्युपगमादपसिद्धान्तो निग्रहस्थानम् ॥**

---

१. 'स्येदानीं मि', २. 'जनमिति' ग. पाठः.

इति । स्पष्टम् । अन्ये तु अन्यथा सूत्रार्थमाहुः — सिद्धान्तमभ्युपेत्य कञ्चिदर्थं प्रतिज्ञायानियमात् तद्विरोधेन कथाप्रसङ्गः कथाकरणमपसिद्धान्त इति ॥

तदयुक्तमित्याह —

**प्रतिज्ञातार्थविपर्ययस्तु प्रतिज्ञाहानिर्नापसिद्धान्तः ॥**

इति ॥

"हेत्वाभासाश्च यथोक्ताः" (५. २. २५) ॥

इति । यथा येन प्रकारेण हेत्वाभासा उक्ताः, तेन प्रकारेण निग्रहस्थानानि, न पुनः प्रमाणस्य प्रमेयत्ववल्लक्षणान्तरेण ॥

तदेवाह —

**हेत्वाभासलक्षणेनैव यथोक्तेन हेत्वाभासा निग्रहस्थानानीत्यर्थः ॥**

इति । चकारो दृष्टान्ताभासानन्वयविपरीतान्वयादिसमुच्चये । तेषामपि निग्रहे हेतुत्वात् ॥

सूत्रोक्तानि द्वाविंशतिर्निग्रहस्थानानि न नियमार्थानि, किन्तु उपलक्ष[1]णार्थानीत्याह —

**एतेन दुर्वचनकपोल[2]ताडनवादित्रादीनां साधनानुपयोगित्वेन निग्रहस्थानत्वं वेदितव्यम् । नियमकथायां त्वपशब्दादीनामपि ॥**

इति । एतेनेति । केषाञ्चिल्लक्षणोदाहरणप्रपञ्चनेन ।

१. 'क्षकाणीत्या' घ. पाठः. २. 'लवा' ग. पाठः.

नियमकथा नाम संस्कृतेनैव मया वक्तव्यं वर्गत्यागेन वा श्लोकप्रबन्धेन वा इत्येवंरूपा इति ॥

इति श्रीमत्काश्मीरसूर्यसूरीन्द्रसूनुवासुदेवसूरि-
विरचितायां न्यायसारपदपञ्चिकायाम्
अनुमानपरिच्छेदः ॥

---

## अथागमपरिच्छेदः ।

**अवसितमनुमानम् । आगमस्येदानीं लक्षणमुच्यते ॥**

इति । अवसितं निश्चितमनुमानमिति वृत्तानुकीर्तनेनागमस्यानुमानपूर्वकत्वात् तल्लक्षणानन्तरमेवास्य लक्षणावसर इति सूचयति । तथाहि — समयग्रहणबलात् शब्दानामर्थावबोधसाधनत्वम् । समयग्रहणं च प्रायेण वृद्धव्यवहारादनुमानरूपादेवेति ॥

**समयबलेन सम्यक्परोक्षानुभवसाधनमागमः ॥**

इति । समयः सङ्केतः पुरुषकृतः, न पुनरविनाभाववत् स्वाभाविकः । स्वाभाविकत्वेऽविनाभाविधूमादिलिङ्गवन्नियतमेवार्थं बोधयेद्, न तद्विपरीतम् । नहि धूमो दहनमिव तदभावं जलादिकं वानुमापयति । दहनादिशब्दास्तु पुरुषेण यत्र यत्र सङ्केत्यन्ते तत्र तत्र यथार्थमिव[2] प्रतीतिं कुर्वन्ति । अतोऽविनाभावात् समयो भिन्नः । [3]समय एव बलं

1. 'प्रायो वृ' घ पाठः. २. 'र्थ' ग. पाठः. ३. 'स ए' ग. घ. ङ. च. पाठः.

सहकारि, तेन समयबलेन। अत्र च समयविषयं ग्रहणं स्मरणं वोपचारेण समयः। समयविषयज्ञानसहकारिणेति यावत्। सम्यक् संशयादिविलक्षणस्य परोक्षस्य परोक्षत्व-जातियुक्तस्यानुभवस्य स्मरणविलक्षणज्ञानस्य साधनं करणं शब्दात्मकमशब्दात्मकं वा चेष्टालिप्यक्षरादि यत् तत् सर्व-मागमः॥

तस्य भेदमाह—

**स द्विविधः दृष्टादृष्टार्थभेदात्॥**

इति। अर्थः प्रयोजनम्। तत्र दृष्टप्रयोजन आ-गमो यथा 'नद्यास्तीरे फलानि सन्ति' 'गेहान्तर्मोदकानी'-त्यादिः। अदृष्टार्थस्तु 'स्वर्गकामो यजेते'त्यादिः॥

अर्थासंसर्गित्वात्[2] सर्वशब्दानामप्रामाण्यमिति बौद्धा मन्यन्ते। तान् प्रत्याह—

**तत्र दृष्टार्थानां वाक्यानां प्रायेण प्रवृत्तिसाम-र्थ्यात् प्रामाण्यमवगम्यते॥**

इति। प्रवृत्तिः कायिकी चेष्टा इष्टप्राप्त्यर्था अनिष्ट-परिहारार्था च। तस्याः सामर्थ्यं तत्तत्प्रयोजनप्रापकत्वम्। तस्मात्। अयमभिसन्धिः—स्वप्रत्यायितमर्थं प्रापयत् प्र-त्यक्षमनुमानं च प्रमाणमिति लोकप्रसिद्धत्वाद् यथा स्वी-क्रियते, तद्वदागमोऽपि स्वप्रत्यायितमर्थं प्रापयन् प्रमाण-मित्यङ्गीकार्यम्, अन्यथा सर्वशब्दानामङ्गुल्यग्रे करियूथशत-मास्त इति वाक्यसमत्वेन शास्त्रलौकिकवचनानामर्थशून्यत्वेन

१. 'समीचः सं' ङ. च. पाठः. २. 'संस्पर्शित्वा' ग. घ. ङ. च. पाठः.

व्यर्थप्रयोगत्वात् मौनशरण एव शाक्यः स्यात् । विवादाध्यासितानि वाक्यानि प्रमाणानि, समर्थप्रवृत्तिकारणत्वात् प्रत्यक्षादिवदिति स्थितम् ॥

**अदृष्टार्थानां पुनराप्तोक्तत्वेनेति ॥**

इति । पुनःशब्दः प्राक्तनवाक्यप्रामाण्यसमर्थनप्रकारवैलक्षण्यज्ञापने ॥

चोदयति —

**कथम् ॥**

इति । अयमभिसन्धिः — न तावत् प्रवृत्तिसामर्थ्येनात्र प्रामाण्यनिश्चयः, अदृष्टार्थत्वादेव । नहि स्वर्गादय इदानीमेवैकेनापि कृतयागेन प्राप्यन्ते । नाप्याप्तोक्तत्वेन, तस्यैव निश्चेतुमशक्यत्वात् । अतः कथमदृष्टार्थानां प्रामाण्यनिश्चय इति ॥

परिहरति —

**'पुत्रकामो यजेते'त्यादिवाक्यानां प्रवृत्तिसामर्थ्यात् प्रामाण्यमनुमाय तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्य तत्प्रणीतानां सर्ववाक्यानामप्रामाण्यकारणाभावात् प्रामाण्यमनुमीयते ॥**

इति । यद्यपि सर्ववेदवाक्यानां प्रवृत्तिसामर्थ्यं न घटते, तथापि तदेकदेशभूतानां 'पुत्रकामो यजेत' 'पशुकामो यजेत', 'कारीर्या वृष्टिकामो यजेते'त्यादिवाक्यानां

---

१. 'यत्वा' ङ. पाठः.

तावत् प्रवृत्तिसामर्थ्यात् प्रामाण्यमनुमीयते। न च वक्तव्यं निर्वर्तितायामपीष्टौ पुत्राद्यदर्शनात् तेषां प्रामाण्यमयुक्तमिति। बाहुल्येन फलोपलम्भात्। क्वचिदनुपलम्भे तु[2] कर्मकर्तृसाधनवैगुण्यमेव कल्प्यतां, न पुनर्वाक्यस्याप्रामाण्यम्। किञ्च, शान्तिकपौष्टिकादिकर्मणां वैदिकानां प्राचुर्येण फलोपलम्भात् तदभिधायिवाक्यानां प्रामाण्यसिद्धेः तत्प्रणेतुरतीन्द्रियार्थद्रष्टृत्वमेव सिद्धमिति। नहि तत्तत्कर्मणां तत्तत्फलानां चापरिमितानां साध्यसाधनभावमन्योऽस्मदादिरसर्वज्ञः प्रतिपत्तुमुपदेष्टुं वा समर्थः। ननु बौद्धाद्यागमानामप्येकदेशसंवादोऽस्तीति प्रामाण्यप्रसङ्ग इति तत्परिहारायोक्तम् अप्रामाण्यकारणाभावादिति। बौद्धादिवाक्यानां तु 'सर्वं क्षणिकं' 'सर्वं शून्यमि'त्येवमादीनां भूयसां बाधकमुपलभ्यत इत्यप्रामाण्यमेव युक्तमिति भावः। तत्रातीन्द्रियैकदेशसंवादस्तु वेदमूलत्वा[3]दप्युपपद्यत इति। नच वैपरीत्यमाशङ्कनीयम्। तत्रानभिहितानां शान्तिकपौष्टिकजातिविभागकर्मणामनन्तानां वेद एवोपलम्भात्॥

"आपणे कियतामेव रत्नानामुपलम्भनात्।
नहि तन्मूलता शङ्क्या रत्नाकरमहोदधेः॥"

"नन्वेवं पौरुषेयत्वात् प्रामाण्यप्रतिपादने।
रागद्वेषादिकालुष्यं पुरुषेषूपलभ्यते॥
अतोऽप्रामाण्यशङ्कापि निष्कलङ्के प्रसज्यते।
वेदप्रमाणता तस्मान्नित्यत्वेनाभ्युपेयताम्॥"

---

१. 'प्रतिपत्ति' ग. पाठः. २. 'म्भेऽपि क' घ. पाठः. ३. 'त्वादुप' ग. पाठः.

इत्याशङ्क्याह —

**न नित्यत्वेन ॥**

इति । नहि नित्यत्वाद् वेदः प्रमाणमिति वक्तुं शक्यते, श्रोत्रान्तःकरणादीनां नित्यत्वेऽपि संशयविपर्ययोत्पादनदशायामप्रमाणत्वेनानेकान्तात् । नित्यत्वे सति पुरुषदोषाणामननुप्रवेशादप्रामाण्यशङ्कानिवृत्तौ वेदे प्रामाण्यं स्वत एवेति चेत् । न । वेदस्य हि विशिष्टज्ञानसाधनत्वं प्रामाण्यम् । तच्च न स्वतः, समयग्रहणापेक्षणात् । अन्यथा व्याकरणादिव्युत्पत्तिरहितानां वेदश्रवणमात्रादर्थप्रतीतिप्रसङ्गः । अथ तज्जनितस्य ज्ञानस्य प्रामाण्यं स्वतः । तत्रापि स्वत इति कोऽर्थः । किमुत्पत्त्यपेक्षया ज्ञप्त्यपेक्षया वा ? न तावत् कार्यस्य कस्यापि स्वत उत्पत्तिर्दृष्टा । अथ सम्यङ्मिथ्याभूतबोधसाधारणकारणमात्रादतिरिक्तकारणानपेक्षाज्जायमानत्वं स्वतस्त्वम् । तदप्ययुक्तं, प्रमाणाभावात् । विपर्यये तु प्रमा सम्यङ्मिथ्याभूतबोधसाधारणकारणादतिरिक्तसहिताज्जायते, साधारणकारणेषु सत्स्वनुत्पद्यमानज्ञानत्वादप्रमावत् । नचासिद्धो हेतुः, मिथ्याज्ञानोत्पत्तिसमये साधारणकारणसद्भावेऽपि प्रमाया अनुत्पादात् । नापि स्वत एव ज्ञप्तिः, ज्ञानस्य स्वसंवेद्यत्वासिद्धेः । भाट्टैरनभ्युपगमाच्च । अथ यया अर्थप्राकट्यान्यथानुपपत्त्या बोधः सिध्यति, तयैव सामग्र्या प्रमाणमित्येव ज्ञायमानत्वात् स्वतःप्रामाण्यमिति । तन्न । असिद्धत्वात् । नहि यथाकथञ्चिदपि ज्ञायमानो बोधः प्रमाणमि-

१. 'त्रादेः क', २. 'क', ३. 'स्य प्रा', ४. 'था', ५. 'तन्न, प्र' ग. पाठः.

त्येव ज्ञायते, मिथ्याभूतबोधस्यापि तथा प्रतीतिप्रसङ्गात्। क्वचिद् बोधेऽपि सम्यङ् मिथ्या वेति संशयदर्शनाच्च प्रामाण्यं परतो ज्ञायते। अनभ्यस्तदशायां संशयविषयत्वादप्रामाण्यवत्। अथ नित्यत्वेनाप्रामाण्यशङ्काया निवृत्तौ पश्चात् प्रवृत्तिसामर्थ्येन महाजनपरिगृहीतत्वेन वा वेदस्य प्रामाण्यं सिध्यतीति चेत्। एतत् पौरुषेयत्वेऽपि समानम्। न चाप्रामाण्यशङ्कानिरासार्थं प्रमाणान्तरोपयोगः, प्रामाण्यसाधकादेवाप्रामाण्यशङ्काया अपि निराससिद्धेरित्यलम्॥

नापि नित्यत्वे प्रमाणमस्तीत्याह —

वाक्यानां हि नित्यत्वे प्रमाणाभावात्। अनित्यत्वे पुनर्वाक्यत्वाद्यनेकमनुमानम्॥

इति। हिशब्दश्चार्थे दूषणान्तरसूचने। पदरचनात्मकं हि वाक्यम्। नच तन्नित्यत्वे प्रमाणमस्ति। नित्यानि वेदवाक्यानि, सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादाकाशवदिति चेत् न। साधनविकलत्वाद् दृष्टान्तस्य। सम्प्रदायाविच्छेदो हि वृद्धपाठपरम्परया यद्[1] वाक्यस्यानुवर्तनम्। नच तोद्रूप्यमाकाशे[2] सम्भवति। किञ्च 'यो धर्मशीलो जितमानदोषः' इत्यादिवाक्यानां बहूनामपि सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वमस्ति न च नित्यत्वमिति व्यभिचारः। ननु नेदमनुमानम्। किन्त्वर्थापत्तिः। तथाहि—यदि वेदः पौरुषेयः स्यात्, तदा तदभिहितकर्मणां[3] सन्ध्यावन्दनादीनां

१. 'यथावद् वा', २. 'तद्रूपमा' ङ. पाठः. ३. 'हितानां क' ग. पाठः.

बहुवित्तव्ययायाससाध्याग्निहोत्रादीनां चानुष्ठानकाले कर्तृस्मरणे सति तत्प्रत्ययादेव प्रवृत्तिः स्यात् । न च तदस्ति । अतोऽवश्यं स्मरणयोग्यस्यापि कर्तुरस्मर्यमाणत्वान्यथानुपपत्त्या वेदानां नित्यत्वमिति । तन्न । शिष्टवृद्धपरम्परानुष्ठानप्रत्ययादेवाकर्तृस्मरणेऽपि भविष्योक्तादिष्टव्रतेष्विव प्रवृत्तेः क्षीणार्थापत्तिः । अनित्यानि वेदवाक्यानि पौरुषेयाणि च¹, वाक्यत्वात्, कालिदासवाक्यवत् । रचनारूपत्वाद् वा, तन्तुरचनावत् । पौरुषेयत्वं च साक्षात् परम्परया वा स्वतन्त्रपुरुषपूर्वकत्वं साध्यम् । अतो नोपाध्यायपरम्परापूर्वकत्वेन सिद्धसाधनम् । स्वातन्त्र्यं च तादृशरचनान्तरानुसन्धानशून्यस्य विशिष्टरचनाहेतुत्वं

"सर्वथा प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता।"

इति वदद्भिः श्रोत्रियैरप्यङ्गीकृतमन्यत्रेत्यलम् ॥

दूषणान्तरमाह —

सर्वदोपलब्ध्यनुपलब्धिप्रसङ्गश्च विपर्यये नियामकाभावात् ॥

इति । वैदिकवाक्यानां सर्वपदानां च नित्यत्व इति शेषः² । यदीन्द्रियग्रहणयोग्यत्वं तदा सर्वशब्दानां नित्यव्यापकत्वेनेन्द्रियसम्बद्धानां सर्वदोपलब्धिप्रसङ्गः । अयोग्यत्वे वा परमाण्वादीनामिव सर्वदैवानुपलब्धिप्रसङ्गः । विपर्यये कदाचिदनुपलम्भलक्षणे नियामकस्य कारणस्याभावात् ॥

१. 'वा', २. 'षः नित्यानां य' घ. पाठः.

परमतमाशङ्कते —

**अभिव्यञ्जकाभावात् तदनुपलब्धिरिति चेत् ॥**

इति । तेषां शब्दानामनुपलब्धिः कदाचिदभिव्यञ्जकाभावात् । तत्सद्भावे तु कदाचिदुपलब्धिरित्यर्थः ॥

दूषयति —

**न । तदनिर्देशात् ॥**

इति । तस्याभिव्यञ्जकस्यानिर्देशादकथनात् । विशेषेणेति शेषः ॥

पुनः परमतमाशङ्कते —

**वायुसंयोगविभागाविति चेत् ॥**

इति । वक्तुस्ताल्वोष्ठपुटव्यापारात् प्रेरितो विशिष्टो वायुरागत्य श्रोतुः श्रोत्रदेशेन यदा संयुज्यते, तदा शब्दोपलब्धिः । यदा च विभज्यते तदानुपलब्धिः । अथवा व्यञ्जकवायुना संयोगः । शब्दवारकस्तिमितवायुना च विभागः । तौ व्यञ्जकावित्यर्थः ॥

परिहरति —

**न । सर्वशब्दानां युगपद्[२]ग्रहणप्रसङ्गात् ॥**

इति ॥

परः प्रत्यवतिष्ठते —

**कथम् ॥**

इति । नहि रूपाद्यभिव्यञ्जकतेजस्संयुक्तेन चक्षुषा सर्वेषां रूपादीनां युगपद् ग्रहणं दृष्टमिति भावः ॥

---

१. 'दा तदनु' घ. पाठः. २. 'त् प्र' ग. पाठः.

युगपच्छब्दानां ग्रहणप्रसङ्गं समर्थयितुमाह —

**श्रोत्रं तावत् समानेन्द्रियग्राह्यसमानदेशस्थानां[1] ग्रहणाय प्रतिनियतसंस्कारसंस्कार्यं न भवति, इन्द्रियत्वात् । चक्षुर्वत् ॥**

इति। प्रतिनियतसंस्कारसंस्कार्यं न भवति इति साध्ये मनसा व्यभिचारः । तद्धि रूपरसादिग्रहणाय प्रतिनियतसहकारिसहितमेव प्रवर्तते । तन्निरासाय[2] समानेन्द्रियग्राह्यग्रहणम् । तथापि भिन्नदेशावस्थितरूपग्रहणाय चक्षुः प्रतिनियतप्रदीपादिसहकारिणमपेक्षत इत्यनैकान्तिकः । तन्निरासाय समानदेशग्रहणम् । समानदेशत्वं च युगपदिन्द्रियसम्बन्धित्वं विवक्षितम् । ननु तथापि शुक्लकृष्णरूपग्राहकचक्षुषा व्यभिचारः । शुक्लरूपं हि मन्दालोकवता चक्षुषा गृह्यते । कृष्णरूपं तु प्रचुरालोकसहितेनेति[3] । न[4] । प्रचुरालोकसहितेन चक्षुषा शुक्लकृष्णयोरुभयोरपि ग्रहणात् प्रतिनियतसंस्कारसंस्कार्यत्वासिद्धेः । अन्ये तु अस्य चोद्यस्य परिहारार्थं समानधर्मापन्नानामिति विशेषयन्ति । तच्चायुक्तम् । सर्वशब्दानां समानधर्मत्वाभावेनासिद्धविशेषणस्य साध्यताप्रसङ्गात् । एतच्च श्रोत्रसंस्कारपक्षेऽनुमानमुक्तम् ॥

विषयभूतशब्दसंस्कारपक्षे दूषणमाह —

**शब्दा वा प्रतिनियतसंस्कारसंस्कार्या न भवन्ति, समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसम्बन्धित्वात्[5], घटवत् ॥**

---

१. 'देशार्थानां' घ. पाठः. २. 'राकरणाय', ३. 'कवतेति', ४. 'तन्न प्र' ग. घ. ङ. पाठः. ५. यग्राह्यत्वात्' ग. पाठः.

इति । युगपदिन्द्रियसम्बन्धित्वादित्युच्यमाने रूपरसगन्धस्पर्शे(षु) व्यभिचारः, तेषामेकद्रव्यसमवेतानां युगपच्चक्षुस्सम्बन्धित्वेऽपि[1] प्रदीपदन्तान्तर्गतोदककस्तूरीवायुविशेषैर्यथासङ्ख्यं संस्कार्यत्वात् । अतः समानेन्द्रियग्राह्यग्रहणम् । समानधर्मापन्नग्रहणं तु यदि पुस्तकान्तरेषु स्यात्, तदा विशेषणासिद्धो हेतुः स्यात् । यदि पुनः शुक्लकृष्णरूपवदुज्ज्वलानुज्ज्वलत्वधर्मरहितत्वमेव समानधर्मापन्नत्वं विवक्षितं, न पुनः सर्वथा साम्यमिति, ततोऽदुष्टो हेतुरिति । एतच्चानुमानं परैः प्रसङ्गसाधनस्याङ्गीकरणादुक्तम् । अन्यथा मन्मते युगपदिन्द्रियसम्बन्धित्वमसिद्धमेव ॥

परमतमाशङ्कते—

उत्पत्तिपक्षेऽप्ययं[2] दोषः समान एवेति चेत् ॥

इति । वायोः शब्दोत्पादकत्वाभ्युपगमेऽप्येकोत्पादकः सर्वोत्पादकः स्यात् । अथ नियतैकैकवर्णोत्पादनेच्छया प्रेरितो वायुस्तमेव करोति नान्यमिति चेत् । व्यञ्जकत्वेऽपि समानम् । तदुक्तं भट्टाचार्यैः —

"अन्यार्थं प्रेरितो वायुर्यथान्यं न करोति सः ।
तथान्यवर्णसंस्कारशक्तोऽन्यं न करिष्यति ॥"

इति ।

परिहरति—

न । मृत्पिण्डप्रदीपदृष्टान्ताभ्यां कारकव्यञ्जकवैधर्म्यसिद्धिरित्यलम्[3] ॥

---

१. 'क्षुःस्पर्शसम्ब', २. 'यं समानो दोष इति', ३. 'लमतिप्रसङ्गेनेति' ग. पाठः.

इति । एको हि मृत्पिण्डः कर्तुरिच्छावशेन घटाद्यन्यतमं कार्यमारभते । व्यञ्जकस्तु प्रदीपः पटप्रकटनेच्छया प्रेरितः स्वसंयुक्तघटादिकमपि प्रकटयत्येव । अतो न कारकव्यञ्जकयोः साम्यम् ॥

इदानीं प्रागुक्तसकलशास्त्रार्थमुपसंहरन् प्रमाणानामन्तर्भावं दर्शयति —

**एवमेतानि त्रीण्येव प्रमाणानि । एष्वेवोपमानार्थापत्तिसम्भवाभावैतिह्यादीनामन्तर्भावः ॥**

इति । आदिशब्देन चेष्टालिप्यक्षरयोः स्वीकारः ॥

वृद्धनैयायिकाभिमतोपमानमन्तर्भावयति —

**तत्र यथा गौरेवं गवय इत्युपमानं शब्देऽन्तर्भूतम् ॥**

इति । अदृष्टगवयेन गवयार्थिना नागरिकेण कीदृग् गवय इति पृष्टो वनेचरः प्राह यथा गौरेवं गवय इति । एतत् किल वाक्यं गवोपमानेन गवयं ज्ञापयत् पृथक् प्रमाणमिति । तच्चायुक्तम् ।

"दीर्घग्रीवः प्रलम्बोष्ठश्चतुष्पाद् विकृताकृतिः ।
उष्ट्र इत्यादिवाक्यस्य पृथक्प्रामाण्यसक्तितः ॥"

मीमांसकाभिमतमुपमानमाशङ्कते —

**अनेन सदृशी मदीया गौरित्युपमानमिति चेत् ॥**

इति । अटव्यामटतः पुरुषस्य गोसदृशपिण्डोपलम्भाद् मदीया गौरनेन सदृशीति ज्ञानमुपजायमानं न

---

१. 'एता' ग. घ. पाठः.

तावत् प्रत्यक्षं, गोपिण्डस्य तदेन्द्रियासन्निकृष्टत्वात् । नापि स्मरणं, गवयसादृश्यावच्छेदेन पूर्वं[1] ग्रहणाभावात् । नाप्यनुमानं, लिङ्गाभावात् । अथ गौरनेन सदृशीति ज्ञानमुपजायमानमस्य तत्सदृशत्वादित्युच्यते, तदा अधिकरणासिद्धो हेतुः । अनुपपद्यमानार्थासम्भवाच्च नार्थापत्तिः । शब्दाभावयोश्चासम्भवादुपमानमेवेति भावः ॥

परं दूषयति —

न । तस्य स्मृतित्वात् । पूर्वमेव हि सादृश्यविशिष्ट उपलब्धो गोपिण्डः । कस्मात् । उपलब्धियोग्यत्वात् । अयोग्यत्वे वा न कदाचिदुपलभ्येतादृष्टवत् ॥

इति । भूयोवयवसारूप्यं हि गोर्गवयेन सादृश्यम् । तच्चेन्द्रियग्रहणयोग्यत्वादाश्रयग्रहणकाल[2] एव गृहीतम् । केवलं प्रतियोगिग्रहणप्रतिबुद्धसंस्कारस्य स्मरणमेवोत्पद्यते ॥

पूर्वमेव गवयसदृशी चेद् गौरुपलब्धा, किमिति तदा तथा निश्चयो न भवतीत्याशङ्क्याह —

निर्विकल्पकेन तु प्रत्यक्षेण पूर्वं सादृश्यमुपलब्धम् । तेन तदोपलब्ध्यभिमानो न भवति ॥

इति ॥

तर्हि पश्चान्निश्चयात्मिका स्मृतिः कथं स्यात्, अनुभवाकारानुकारित्वात् स्मृतेरित्यत्राह —

निर्विकल्पकोपलम्भेऽपि संस्कारसहकारिसामर्थ्यादभावादिषु सविकल्पिका स्मृतिर्दृष्टेति ॥

---

१. 'पूर्वमग्रहणात्' ग. क. पाठः. २. 'हका' ग. पाठः.

इदानीन्तननैयायिकाभिमतोपमानमनूद्य दूषयति —

**संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरप्याप्तवचनकार्या ॥**

इति । गोसदृशो गवय इत्यतिदेशवाक्यं श्रुतवतोऽटवीमटतो गोसदृशपिण्डदर्शनानन्तरमयं गवयनामेति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरुत्पाद्यमानोपमानफलम् । गोसादृश्यविशिष्टपिण्डदर्शनं च प्रमाणमित्याचार्या[२] उद्द्योतकारादयो मन्यन्ते । तच्चायुक्तम् । आप्तवचनादेवातिदेशरूपात् पूर्वमेव संज्ञासंज्ञिसम्बन्धज्ञानस्योत्पन्नत्वादिति ॥

तत्रार्थे प्रमाणमाह —

**तथा प्रश्नोत्तराभिधानादन्यप्रमाणानिर्देशाच्च ॥**

इति । कथं च जानीषे गवयनामायमिति केनचिदनुयुक्तः सन् वनेचरवचनादवगतमिति ब्रूते, न पुनरुपमानेन जानामीति प्रमाणान्तरं निर्दिशति ॥

परमतमाशङ्कते —

**अस्य गवयशब्दः संज्ञेति प्रतिपत्तावुपमानासिद्धिः, तथा शब्दाश्रवणादिति चेत् ॥**

इति । गोसदृशो गवय इति वनेचरवचनाद् गवयस्य गोसादृश्यमात्रं प्रतीयते । पश्चाद् गोसादृश्यविशिष्टपिण्डदर्शने सत्यस्य पिण्डस्य गवयशब्दः संज्ञेति प्रतिपत्तौ प्रमाणान्तराभावादुपमानमेष्टव्यम् । कस्मात् । तथा अस्य गवयशब्दः संज्ञेति प्रकारेण शब्दस्य पूर्वमश्रवणात् ॥

---

१. 'यिकोप' ग. पाठः. २. 'र्योद्द्यो', ३. 'श्चात्तु सा' ग, घ. पाठः.

परिहर्तुमतिप्रसङ्गं तावद् दर्शयति —

**एवं तर्हि गौरयमित्यस्मिन्[1] सङ्केते कृतेऽस्य गोशब्दः संज्ञेति प्रतिपत्तौ प्रमाणान्तरं वाच्यं, समानन्यायत्वात् । गोपिण्डान्तरेऽपि सङ्केतग्रहणे प्रमाणान्तराभिधानप्रसङ्ग इति ॥**

इति । य[2]स्मिन् पिण्डे सङ्केतोऽन्यै[3]वचनाद् गृहीतस्ततोऽन्यो गोपिण्डो गोपिण्डान्तरम् । तस्मिन्निदानीमतिप्रसङ्गः ॥

परेणाभिधीयमानं परिहारं स्वपक्षेऽपि समीकर्तुं तमेवाशङ्कते —

**तथा शब्दानभिधानेऽपि प्रतिपादकप्रतिपत्त्रोरेवमेवाभिप्रायः—ईदृशस्य सर्वस्य गोशब्दः संज्ञेति सामर्थ्यादेवं प्रतिपत्तिरिति चेत् ॥**

इति । तथा शब्दानभिधानेऽपि एवञ्जातीयकस्य सर्वस्य गोशब्दः संज्ञेति शब्दानुच्चारणेऽपि । सामर्थ्यमूहनशक्तिरदृष्ट[4]विशेषः ॥

परोक्तं परिहारं स्वपक्षेऽपि योजयति —

**समानमेतदितरत्रापि । गोसदृशो गवय इति शब्दादुभयोरेवमेवाभिप्रायः गोसदृशस्यार्थस्य गवयशब्दः संज्ञेति सामर्थ्यादेवं प्रतिपत्तिरिति ॥**

इति ॥

---

१. 'मित्येवं स', २. 'अ' ख. पाठः. ३. 'न्यत्र व' ग. पाठः. ४. 'विषयः प' ख. पाठः.

ननु वनेचरवचनोच्चारणकाले गवयस्याप्रत्यक्षत्वात् कथं तत्र संज्ञाकरणम् । 'प्रत्यक्षं संज्ञाकर्मे'ति सूत्रविरोधादित्याशङ्क्याह —

**नच प्रत्यक्ष एवार्थे संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः, अप्रत्यक्षेऽपि शक्रादौ संज्ञासंज्ञिसम्बन्धप्रतिपत्तिदर्शनात् ॥**

इति । देवानामधिपतिः सहस्राक्षो यः स शक्र[1] इति संज्ञाप्रत्यायनम् । तथा स्वपुत्रादौ दृढप्रमाणावगते दूरस्थेन पित्रा संज्ञाकरणमपि दृष्टमिति "प्रत्यक्षं संज्ञाकर्मे"ति सूत्रे प्रत्यक्षशब्दो दृढप्रमाणोपलक्षणपर इति वैशेषिकैरेव व्याख्यातम् ॥

तर्हि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" (१-१-३) इति प्रमाणविभागसूत्रविरोध इत्याह —

**सूत्रविरोध इति चेत् ॥**

इति ॥

परिहरति —

**न । प्रमाणनिग्रहस्थानाभ्यां दृष्टान्तहेत्वाभासादीनामिव प्रयोजनवशेन पृथगभिधानात् ॥**

इति । "प्रमाणप्रमेयसंशय—" इत्यादिप्रथमसूत्रे प्रमाणान्तर्भूतस्य[2] दृष्टान्तस्य निग्रहस्थानान्तर्भूतानां हेत्वाभासादीनां यथा प्रयोजनवशेन पृथगभिधानं, तथा शब्दान्तर्भूतस्याप्युपमानस्य प्रयोजनवशेन पृथगभिधानमित्यर्थः ॥

---

१. 'शतक्रतुरिति' ख. पाठः. २. 'भौक्त्य' क. पाठः.

पृच्छति —

**तर्हि प्रयोजनं वाच्यम् ॥**

इति ॥

प्रयोजनमाह —

**उच्यते । शब्दप्रामाण्यसमर्थनं प्रयोजनम् ॥**

इति ॥

परः प्रत्यवतिष्ठते —

**कथम् ॥**

इति । अयमभिसन्धिः—"तदप्रामाण्यमनृतव्याघात-पुनरुक्तदोषेभ्यः" (२-१-५६) इति पूर्वपक्षसूत्रे "न कर्मकर्तृ-साधनवैगुण्यात्" (२-१-५७), "अभ्युपेत्य कालभेदे दोषवच-नात्" (२-१-५८), "अनुवादोपपत्तेश्च" (२-१-५९) इति सूत्रेषु वा शब्दप्रामाण्यसमर्थनार्थेषु नोपमानस्योपयोगः श्रूयते । तत् कथं पृथगभिधानस्यैतत् प्रयोजनं स्यादिति ॥

प्रकारान्तरेण शब्दप्रामाण्यसमर्थनार्थत्वमुपमानस्य दर्शयिष्यन् पराशङ्कां तावद् दर्शयति —

**केचिदाहुः — प्रत्यक्षानुमानविषयत्वे शब्दस्या-नुवादकत्वम् । तदविषयत्वे सम्बन्धाग्रहणादवाचक-त्वम् ॥**

इति । प्रत्यक्षानुमानयोर्विषय एव विषयो यस्यासौ प्रत्यक्षानुमानविषय इत्येकस्य विषयशब्दस्य लोपेन समासः । अनुवादकत्वं प्रमाणान्तरगृहीतैकविषयत्वम् । ततश्च स्मृति-वदप्रामाण्यं स्यादित्यर्थः ॥

पदेनैवार्थमभिधाय तत्र पदं सङ्केत्यतामित्याशङ्क्याह —

**पदार्थस्याप्रसिद्धत्वान्न पदेन सम्बन्धग्रहणमितरेतराश्रयत्वात् ॥**

इति । पदेनार्थाभिधाने सम्बन्धग्रहणम् । तद्ग्रहणे च पदेनार्थाभिधानमिति ॥

वाक्येनापि सम्बन्धो ग्रहीतुमशक्य इति दर्शयति —

**वाक्यार्थस्तु प्रसिद्धानां पदानामन्वयमात्रमिति ॥**

इति । पद्यन्ते ज्ञायन्त इति पदानि । तेषां, पदार्थानामित्यर्थः । किंविशिष्टानाम् । प्रसिद्धानाम । पदैरभिहितानामन्वयमात्रं वाक्यार्थः । एवञ्च सम्बन्धाग्रहणे पदार्थाप्रसिद्धिः । तदप्रसिद्धौ च वाक्यार्थाप्रसिद्धिरिति कथं वाक्येन सम्बन्धग्रहणमित्यर्थः ॥

एवं परोक्तं दूषणमनूद्येदानीं तत्परिहार उपमानस्योपयोगमाह —

**तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम् । यथा कार्यार्थिनोऽप्रसिद्धगवयस्य प्रसिद्धं गोसादृश्यमुपादायोपमानाख्येन वाक्येन संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः क्रियते, तथा किञ्चिन्निमित्तमुपादाय शक्रादिपदपदार्थयोरपि । तस्मादन्यार्थत्वान्न सूत्रविरोधः ॥**

इति । किञ्चिन्निमित्तं सहस्राक्षत्वदेवाधिपत्यादिकमुपादाय शक्रादिपदपदार्थयोरपि संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः ।

१. 'द्धार्थानां', २. 'दाना', ३. 'मानमिति नि', ४. 'रपीति । त' ग. पाठः.

क्रियत इत्यनुवर्तते। तथाच प्रत्यक्षानुमानेसमानविषयत्वेऽपि नाप्रामाण्यं, संवादाभ्युपगमात्। पदान्तरसन्निधाने च तदर्थान्वितापूर्वार्थप्रतिपादकत्वात् ॥

ननूपमानस्य पृथक्प्रामाण्याभावे 'अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः' (२-१-४२), 'प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः' (२-१-४३) इति सूत्राभ्यां सूत्रकारेणाप्रामाण्यशङ्कापूर्वकं प्रामाण्यसमर्थनं किमर्थं कृतमित्याशङ्कयाह —

परीक्षा चार्थापत्तिवत् प्रमाणस्य सतः प्रमाणेष्वन्तर्भावज्ञापनार्थम् ॥

इति ॥

ननूपमानस्यान्तर्भावमप्याशङ्क्य परिजहार सूत्रकारः। तथाचोपमानमनुमानं, 'प्रत्यक्षेणाप्रत्यक्षसिद्धेः'[१] (२-१-४४) परा(मा ?)र्थमुपमानमिति चेत्। न। स्वयमप्यध्यवसायात् 'तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः'[२] (२-१-४६) इति। तस्मात् कथमन्तर्भावे सूत्रविरोधो न भवतीत्याशङ्कयाह —

अन्तर्भावस्त्वनुमान एवास्य यथाश्रुतोऽपि निराकृतो नागम इति ॥

इति। निराकृतोऽपीति सम्बन्धः ॥

ननु 'न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्' (२-२-१) इत्यादिषु सूत्रेषु प्रमाणचतुष्टयश्रवणात् त्रित्वं सूत्रविरुद्धमित्यत आह —

चतुष्ट्वाभिधानं सूत्रेषु पञ्चत्वादिनिराकरणार्थं,

१. 'नवि' ङ. च. पाठः. २. 'द्धेः न च प' ख. ङ. पाठः. ३. 'वः' ग. पाठः.

न त्रित्वप्रतिषेधार्थं प्रमाणसिद्धत्वादन्तर्भावस्य ॥

इति ॥

परमतमाशङ्कते —

त्रित्वानभिधानादयुक्तमिति चेत् ॥

इति। यदि सूत्रकारः प्रमाणत्रित्वमेवाभ्युपागमिष्यत् तदा क्वचित् त्रित्वमभ्यधास्यत्। नचाभ्यधात्। तस्माद् युक्तमेतादिति ॥

परिहरति —

न[1]। सूत्रकारस्यैवंस्वभावत्वात्, यत् सिद्धान्तमपि क्वचिन्नाभिधत्ते यथा कृत्स्नैकदेशविकल्पादिनावयविनिराकरणे ॥

इति ॥

कुत एव तदनभिधानमित्यत्राह[2] —

शिष्याणामूहादिशक्त्यतिशययुक्तानामेवात्राधिकार इति ज्ञापनार्थम् ॥

इति ॥

उपसंहरति —

तस्मात् स्थितमुपमानं शब्देऽन्तर्भूतम् ॥

इति ॥

अर्थापत्तेरप्यनुमानेऽन्तर्भावोऽविनाभावबलेनार्थप्रतिपत्तिसाधन[3]त्वात् ॥

---

१. 'नास्य सू' ख. ग. ङ. पाठः. २. 'त्यत आह', ३. 'क' घ. पाठः.

इति । दहनानुमाने धूमवदिति शेषः ॥

अविनाभावमेव दर्शयति —

**अन्यथा नोपपद्यत इत्युक्ते सत्येवोपपद्यत इति लभ्यते । अयमेवाविनाभाव इति ॥**

इति ॥

परमतमाशङ्कते —

**यत्र सामान्याकारेणाप्यन्वयग्रहणं नास्ति यथा मुख्यकारणत्वाप्रतिबन्धशक्त्योः, तत्रार्थापत्तिः पृथक् प्रमाणमिति चेत् ॥**

इति । मुख्यकारणत्वं नाम सकलसहकारिसाकल्यं यदनन्तरमेव कार्योत्पत्तिः। सहकारिणश्च दृष्टादृष्टरूपाः । न च तेषां साकल्यं क्वचिदप्यस्मदादिप्रत्यक्षम् । किन्तु कार्यैक-समधिगम्यम् । तथा वह्न्यादीनां दाहकत्वादिशक्तेः प्रति-बन्धाभावोऽपि न प्रत्यक्षः । प्रतिबन्धकानां मणिमन्त्रादीना-मनन्तत्वेन तदभावस्याप्यनन्तत्वात्[1] । अतो मुख्यकारणत्वा-प्रतिबन्धशक्त्योः प्रतिपत्तौ सामान्याकारेणाप्यन्वयग्रहणा-भावादनुमानासम्भवेऽर्थापत्तिरेव प्रमाणमित्यर्थः ॥

परिहरति —

**न । तत्रापि केवलव्यतिरेक्यनुमानादव्यतिरेकात् । केवलव्यतिरेकी अर्थापत्तिरिति संज्ञाभेदमात्रम् ॥**

इति । प्रयोगस्तु — कार्योत्पत्तेः[2] पूर्वक्षणे कारणानि सकलसहकारिसमवेतानि सकलप्रतिबन्धकशून्यानि वा ।

१. 'प्यसंख्यत्वात्' ख. ङ. पाठः. २. 'त्तौ' ग. पाठः.

अनन्तरमेव कार्योत्पादकत्वात्। यानि पुनरेवं न भवन्ति, न तान्यनन्तरं कार्योत्पादकानि । यथा केवलतन्तवो मणिप्रतिबद्धो[1]ऽग्निर्वा ॥

चोदयति —

अन्वयाभावान्नैतदनुमानमिति चेत् ॥

इति ॥

परिहरति —

न । केवलान्वयिनो व्यतिरेकाभावेन प्रमाणान्तरत्वप्रसङ्गात् ॥

इति । स्पष्टम् ॥

दूषणान्तरमाह[2] —

अपिच प्रत्यक्षादिभेदानां केनाचिद् वैधर्म्येण भेदात् प्रमाणान्तरत्वप्रसङ्गः ॥

इति । सविकल्पकनिर्विकल्पकभेदेन योग्ययोगिप्रत्यक्षभेदेन वा द्विविधं प्रत्यक्षम् । कार्यकारणानुभयात्मकभेदेन त्रिविधमनुमानम् । दृष्टादृष्टार्थभेदेन द्विविधः शब्द इति ॥

उपसंहरति —

तस्मादविनाभावबलेनार्थप्रतिपादकत्वादर्थापत्तिरनुमानम् ॥

इति ॥

केनचित् सहस्रमेतदिति कथितेऽत्र शतं सम्भवतीति ज्ञाने सम्भवाख्यं माणमिति केचिदाहुः । तन्निराकरोति —

१. 'न्धकोऽग्नि' ग. पाठः. २. 'ह — म' ख. पाठः.

***अल्पसङ्ख्याविषयत्वे सति बहुत्वसङ्ख्याविषयत्वस्य सर्वत्रोपलम्भाद् नानुमानात् सम्भवो भिद्यत इति ॥**

इति। प्रयोगस्तु — विवादपदं सहस्रं स्वसमुदायिशतवत्, सहस्रत्वात्, पूर्वपरिगणितसहस्रवत् ॥

**अभावस्य तु त्रिष्वपि यथासम्भवेनान्तर्भावः। तथाहि — कौरवाद्यभावप्रतिपत्तिरागमात् ॥**

इति। व्यासाद्याप्तवचनात्। अभावप्रत्यक्षत्वे विप्रतिपत्तेर्[1]बहुवक्तव्यतया व्यत्ययेनान्तर्भावो निरूपितः ॥

**आत्मादिषु रूपाद्यभावप्रतिपत्तिरनुमानात् ॥**

इति। आत्मा रूपरहितः नियमेनाचाक्षुषप्रत्यक्षत्वाद् वायुवत्, गन्धर[2]सहीनो रूपरहितत्वाद् वायुवत्, स्पर्शरहितोऽस्मदादिमानसप्रत्यक्षत्वात् सुखादिवत्। आकाशं रूपरसगन्धरहितं स्पर्शरहितत्वादात्मवदित्याद्यूह्यम् ॥

**भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षात्। इन्द्रियव्यापारभावभावित्वात् ॥**

इति। इन्द्रियव्यापारस्य भाव एव भवतीत्येवंशीलं यस्य तदिन्द्रियव्यापारभावभावि तस्य भावस्तत्त्वं, तस्मात्। तथाहि — निर्घटं भूतलमित्यादिज्ञानमिन्द्रियजमिन्द्रियान्वयव्यतिरेकानुविधायित्वाद् रूपादिज्ञानवत् ॥

---

१. 'त्तौ बहु', २. 'रहितः रू' ग. पाठः.

---

* 'बहुसङ्ख्याविषयत्वे सत्यल्पसङ्ख्याविषयत्वस्य सर्वत्रोपलब्धत्वाद् ना' इति मुद्रितन्यायसारपाठः.

चोदयति —

**अन्यत्र तद्भावभावित्वं पर्यवसितामिति चेत् ॥**

इति । अन्यत्रेत्यभावाधारभूतलादिग्रहणे । तथा-चोक्तं —

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥"

इति ॥

परिहरति —

**न । रूपादिष्विव बाधकाभावात् ॥**

इति । नहि रूपाद्याश्रयद्रव्यग्रहण एवेन्द्रियव्यापारः पर्यवसितः, न रूपादिष्विति युक्तम् । किञ्च घ्राणव्यापारे सत्येव निर्गन्धं कुसुममिति ज्ञानमुत्पद्यते । नच तत्र इन्द्रियव्यापारोऽन्यत्र पर्यवासित इति युक्तं वक्तुम् । द्रव्यस्य घ्राणाविषयत्वात् ॥

**सम्बन्धाभावो बाधक इति चेत् ॥**

इति । नह्यभावेनेन्द्रियस्य संयोगः समवायो वा सम्भवतीति भावः ॥

परिहरति[2] —

**न । स्वपरपक्षयोरसिद्धत्वात् ॥**

इति । मीमांसकस्य पक्षोऽत्र स्वपक्षः ॥

एतदेव विवृणोति —

**स्वपक्षे तावद् रूपादिष्विवापरोक्षानुभवकार्यानुमेयो[3]**

---

१. 'लग्न' घ. च, पाठः. २. 'ति—स्व', ३. 'थ' ग. पाठः.

**योग्यताख्यः सम्बन्धः । परपक्षेऽपि संयुक्तविशेषणभावादिरिति ॥**

इति । आदिशब्देन संयुक्तविशेष्यभावादीनां प्रत्यक्षपरिच्छेदोक्तानां स्वीकारः ॥

परमतमाशङ्क्य परिहरति —

**संयोगसमवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेद् । न । विशिष्टप्रत्ययवशेन तत्सिद्धेरिति ॥**

इति । गोमान् धनवानित्यादिष्विवेति[1] भावः ॥

ऐतिह्यमन्तर्भावयति —

**अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यमागमेऽन्तर्भूतम् ॥**

इति । अनिर्दिष्टोऽनिश्चितः प्रवक्ता स्वयं द्रष्टृत्वेन मूलभूतो यत्र तदनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यम् । सत्यं चेदिति शेषः । असत्यं चेदप्रमाणमेव ॥

उदाहरति —

**यथा इह वटे यक्षः प्रतिवसति ॥**

इति ॥

चेष्टा नाम प्रमाणान्तरमिति केचित्, अनुमानेऽन्तर्भूतेति चापरे। तदुभयमपि चेष्टालक्षणाभिधानपूर्वकं निषेधति —

**प्रयत्नजन्या शरीरतदवयवक्रिया चेष्टा । सा नाट्यशास्त्रादिसमयबलेन पुरुषाभिप्राय[2]विशेषमर्थविशेषं च गमयन्ती नागमाद् भिद्यते लिप्यक्षरादर्थप्रतिपत्तिवदिति ॥**

---

१. 'ति । एवम् ऐ' ग. पाठः. २. 'यम' ख. ङ. पाठः.

इति । प्रयत्नजन्येत्यनेन वाय्वादिविकारजनितहस्तादिकम्पव्यवच्छेदः । नाट्यशास्त्रादीत्यादिशब्दो[1]लोकव्यवहारपरिग्रहः । क्रियेत्युपलक्षणम् । संयोगेनाप्यर्थप्रतीतिदर्शनात् । यथा हस्तमुखसंयोगविशेषाभ्यां बुभुक्षापिपासाप्रतिपत्तिः । लिपिरेवाक्षरं लिप्यक्षरं, तस्मादिति । अनेन चेष्टायाः प्रमाणान्तरत्वाभ्युपगमे लिप्यक्षराणामपि प्रमाणान्तरत्वप्रसङ्ग इति सूचितम् । नच वक्तव्यं लिप्यक्षरानुमिताक्षरेभ्योऽर्थप्रतिपत्तिरिति । क्रमे प्रमाणाभावात् । चेष्टायां[2] वा तथा प्रसङ्गात् ॥

उपसंहरति —

**तदेवं व्यवस्थितमेतदेतानि त्रीण्येव प्रमाणानीति ॥**

प्रमाणज्ञानमात्रमेव नापवर्गसाधनम् । किन्तु तेन प्रमीयमाणं किञ्चिद् वस्तुतत्त्वम् ॥

तच्च किं स्यादित्यभिप्रायेण पृच्छति —

**किं पुनरेभिः प्रमाणैः प्रमातव्यमिति ॥**

इति ॥

उत्तरमाह —

**उच्यते । प्रमेयम् ॥**

इति ॥

पुनः पृच्छति —

**किंलक्षणम् ॥**

इति । यद्यपि पूर्वं प्रमाविषयः प्रमेयमिति लक्षण-

---

१. 'ब्देन लोक' ग. पाठः. २. 'तो' ग. घ. ङ. पाठः.

मुक्तं, तथापि न प्रमेयसामान्यापेक्षयायं प्रश्नः। किन्तु तद्विशेषापेक्षयेति न विरोधः॥

उत्तरमाह —

**यद्विषयं ज्ञानमन्यज्ञानानुपयोगित्वेनैव निःश्रेयससाधनं भवति, तत् प्रमेयम्। तदेव तत्त्वतो ज्ञातव्यं, सर्वदा भावयितव्यं च। न कीटसंख्यादि[1]। तज्ज्ञानस्यानुपयोगित्वात्॥**

इति। अन्यज्ञानानुपयोगित्वेनैवेत्यनेन[2] प्रमाणादिव्यवच्छेदः। प्रमाणादिज्ञानस्यात्मादिज्ञानोपयोगित्वेन निःश्रेयससाधनत्वात्[3]। न तु साक्षात्॥

प्रमेयं विभजते --

**तच्चतुर्विधं —हेयं, तस्य निर्वर्तकं, हानमात्यन्तिकं, तस्योपाय इति॥**

इति। यद्यपि सूत्रकारेण 'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' (१-१-९) इति द्वादशविधं प्रमेयमुक्तं, तथापि तस्य चतुर्धा भाव्यमानस्यैव निःश्रेयसनिमित्तत्वमिति ज्ञापयितुं सङ्ग्रहे चातुर्विध्यमुक्तम्॥

चतुर्विधस्यापि स्वरूपमाह —

**तत्र हेयं— दुःखमनागतम्॥**

इति। हेयं नामावश्यं प्रयत्नेन परित्याज्यम्। तच्चा-

---

१. 'ज्ञादि' ख. च. पाठः. २. 'गीत्यनेन प्र' ङ., 'गित्वेनेत्यनेन-पदेन प्र' च. पाठः. ३. 'त्वात्॥ प्र' ग. च. पाठः.

नागतमेव । अतीतस्योपभुक्तत्वाद् , वर्तमानस्याप्युपभोगं विना प्रकारान्तरेण परिहर्तुमशक्यत्वात् ॥

हेयमपि विभजते —

**एकविंशतिप्रकारं — शरीरं, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं, दुःखं चेति ॥**

इति । घ्राणरसनचक्षुस्त्वक्छ्रोत्रमनांसि षडिन्द्रियाणि । गन्धरसरूपस्पर्शशब्दा बहिर्विषयाः, ज्ञायमानतया सुखदुःखहेतुत्वात् । मनोविषयस्तु स्मृतिसङ्कल्पावित्येके । निद्रालस्यकामादिरित्यपरे । विषयाणामिन्द्रियाणां च षड्विधत्वाद् बुद्धयोऽपि षडित्युच्यन्ते ॥

शरीरादीनां दुःखादत्यन्तविलक्षणत्वात् कथं दुःखशब्दवाच्यत्वमित्याशङ्कयाह —

**तत्र शरीरं दुःखायतनतया दुःखम् ॥**

इति । दुःखस्यायतनं गृहम् । शरीरावच्छिन्नात्मप्रदेशे हि दुःखमुत्पद्यते, नान्यत्र । एतेनैव विशेषेण ज्ञायमानतया दुःखहेतुभ्यो विषयेभ्यः शरीरं पृथगुक्तम् ॥

**इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात् ॥**

इति । दुःखमित्यनुवर्तते ॥

**सुखं दुःखानुषङ्गाद् दुःखम् ॥**

इति । दुःखेनानुषङ्गोऽविनाभावः । सुखहेतूनामेव दुःखहेतुत्वादभेदोपचारादेव शरीरादौ दुःखशब्दः प्रयुक्त

---

१. 'त्वात् । एतेनोप' ग. ङ. च. पाठः.

इति दर्शितम्। दुःखरूपतया भाव्यमाना हि शरीरादयः स्वविषयवैराग्यहेतवो भवन्ति ॥

**दुःखं तु[1] बाधापीडासन्तापात्मकं मुख्यत एवेति ॥**

इति । दुःखशब्दवाच्यमिति शेषः ॥

**तस्य निर्वर्तकमसाधारणकारणमविद्यातृष्णे धर्माधर्माविति च ॥**

इति । तस्य गौणमुख्यभेदभिन्नदुःखस्य । निर्वर्तकमित्यस्य व्याख्या असाधारणकारणमिति । यद्यपि धर्मः सुखस्य कारणं, तथापि सुखस्य दुःखानुषङ्गेण दुःखवर्गान्तःपातित्वाद् दुःखहेतुरुक्तः, प्रवर्तकस्य धर्म[2]स्यापि हेयत्वज्ञापनार्थम् ॥

अविद्यादीनां लक्षणमाह—

**सम्यगध्यात्मविद्भिः प्रदर्शिते[3]ऽर्थे विपरीतज्ञानमविद्या सह संस्कारेणेति ॥**

इति । आत्मन्यधिवर्तत इत्यध्यात्मं शरीरादि । यथा सम्यग् भवति तथा अध्यात्मं विदन्तीत्यध्यात्मविदः । तैः प्रदर्शिते[4] प्रकटितेऽर्थे

"अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥

जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥"

१. 'तु वेदनास' ग. पाठः. २. 'तस्या' च. पाठः. ३. 'तार्थेवि' ङ. च. पाठः. ४. 'तः प्रकटितोऽर्थः अ' च. पाठः. ५. 'रुजाशो' ख. पाठः.

इत्यादिना । तस्मिन् विपरीतज्ञानम्

"अमृतस्येव कुण्डानि सुखानामिव राशयः ।
रतेरिव निधानानि योषितः केन निर्मिताः ॥"

इत्येवंरूपमविद्या । प्रलयावस्थायां विपरीतज्ञानाभावेऽपि पुनः शरीराद्युत्पत्तिश्रवणाच्छास्त्राभ्यासजनिततत्त्वज्ञानवतामपि रागद्वेषाद्यभिभवदर्शनादविद्यास्तीति दर्शयति — सह संस्कारेणेति ॥

पुनर्भवप्रार्थना तृष्णा ॥

इति । पुनर्भवस्य विशिष्टशरीरादिलाभस्य प्रार्थना वाञ्छा ॥

सुखदुःखयोरसाधारणहेतू धर्माधर्माविति ॥

इति । सुखस्यासाधारणो मुख्यः दुःखस्याकारणभूतो हेतुः धर्मः । दुःखस्य पीडात्मकस्य मुख्योऽसाधारणः सुखस्यानिमित्तभूतो हेतुरधर्मः ॥

हानं दुःखविच्छेदः ॥

इति । दुःखस्य एकविंशतिभेदभिन्नस्य विच्छेदो हानम् ॥

आत्यन्तिकमिति न कदाचित् कथञ्चिद् दुःखसम्बन्ध इत्यर्थः ॥

इति । अत एव संसारदशायामौषधाद्युपयोगेन दुःखविच्छेदसद्भावेऽप्यात्यन्तिकं हानमिति नोच्यते । त्रिनष्टाया

१. 'याथव' ग. पाठः.

दुःखव्यक्तेः पुनरुत्पत्त्यभावेऽपि तज्जातीयस्य व्यक्त्यन्तर-स्योपोदानात् ॥

**तस्योपायस्तत्त्वज्ञानमात्मविषयम् ॥**

इति । यद्यपि द्वादशविधप्रमेयविषयं सूत्रेऽभिहितं, तथाप्यात्मनः प्राधान्यज्ञापनार्थमात्मविषयमित्युक्तम् । तथा-हि — पूर्वं शरीरादिषु हेयत्वेन ज्ञानोत्पादवतस्तद्व्यतिरि-क्तात्मनि च श्रुत्यादिप्रमाणैर्निश्चिते पश्चात् तत्रैव ज्ञाना-भ्यासो निःश्रेयससाधनम् ॥

अत्र संवादिकां श्रुतिं पठति

**तथाचोक्तम् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति ।**

**"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।**
**ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः ॥"**

**इति ॥**

इति । वाशब्दोऽवधारणे । एते श्रवणमनननिदिध्या-सनरूपा दर्शनस्यात्मविषयसाक्षात्कारज्ञानस्य हेतवः ॥

आत्मज्ञानं च निःश्रेयसकारणमित्यत्र श्रुतिं दर्शयति —

**'तरति शोकमात्मविदि'ति च ॥**

इति ॥

आत्माद्वैतज्ञानमेव निःश्रेयससाधनमिति मतनिरासार्थमाह —

**स द्विविधः परश्चापरश्चेति । तथाचोक्तं 'द्वे ब्रह्मणी वेदितव्ये परं चापरं चे'त्यादि ॥**

१. 'तच्छेषसूतस्य' ख. पाठः. २. 'त्पादना' च. पाठः. ३. 'यं सू' क. ख. पाठः. ४. 'नध्यानरू' ग. ङ. पाठः.

इति । आदिशब्दाद् 'द्वा सुपर्णा सयुजा सखाया' इति श्रुतिः,

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥"

इत्यादिस्मृतिश्च स्वीक्रियते ॥

परापरयोर्लक्षणं प्रमाणं चाह —

तत्रैश्वर्यविशिष्टः संसारधर्मैरीषदप्यस्पृष्टः परो भगवान् परमेश्वरः सर्वज्ञः सकलजगद्विधाता ॥

इति । ऐश्वर्यं सकलपुरुषाधिष्ठातृत्वम् । तेन विशिष्टो युक्त इत्येकं लक्षणम् । संसारधर्मैः रागद्वेषमोहदुःखादिभिरीषदपि सर्वदाप्यस्पृष्ट इति द्वितीयम् । सर्वज्ञः, अनादिरिति शेषः । एतत् तृतीयम् । गच्छति विनश्यतीति जगत् । सकलस्य विनश्यतो वस्तुनो विधातेत्यनेन सह चत्वारि लक्षणानि ॥

प्रश्नपूर्वकं प्रमाणमाह —

स कथं ज्ञातव्यः । अनुमानादागमाच्च । तथाहि — विवादाध्यासितमुपलब्धिमत्कारणकम्, अभूत्वा भावित्वात्, वस्त्रादिवदिति ॥

इति । उपलब्धिः कारणसाक्षात्कारः । नच धर्मिविशेष

१. 'इत्यादिश्रु' ग. पाठः.

स्यानिर्देशात् सन्दिग्धाश्रयो[1]ऽसिद्धो हेतुरिति वाच्यम् । साध्य-विशेषाभिधानेन यत्र बुद्धिमत्पूर्वकत्वा[2]बुद्धिमत्पूर्वकत्वेन वि-वादः, तस्यैवाङ्कुरादेः पक्षीकारात् ॥

अथेश्वरकारणत्वे साध्ये साध्यविकलो दृष्टान्तः, वस्त्रादावीश्वरकारणत्वा-सिद्धेः, व्याप्त्यसिद्धिश्च । बुद्धिमन्मात्रकारणत्वे च साध्ये विवक्षितविशेषासिद्धिः सिद्धसाध्यता च, संसारिणामेव कर्मद्वारेणाङ्कुरादिकारणत्वादित्याशङ्क्याह —

सामान्यव्याप्तेरनवद्यत्वेन निराकर्तुमशक्यत्वात् ततः सामान्यसिद्धौ परिशेषात् कार्यविशेषाच्च कर्तृ-विशेषसिद्धिः । चित्रादिकार्यविशेषात् कर्तृविशेषसिद्धि-वदिति ॥

इति । सामान्यव्याप्तेः यत् कार्यं तत् कारणसाक्षा-त्काराधारकारणमित्येवंरूपायाः । परिशेष्यते येनासौ परिशेषः प्रसक्तप्रतिषेधः । नह्यचेतनस्यासर्वज्ञस्य शरीरिणो वाङ्कुर-शरीराद्यशेषकार्येषु नैरन्तर्येण हेतुत्वं घटते । अतो विवादा-ध्यासितं कार्यमशरीरसर्वज्ञपूर्वकमस्मदाद्यजन्यकार्यत्वात् । यदेवंविधसाध्यं न भवति तदस्मदाद्यजन्यकार्यं न भवति यथा घटादीति व्यतिरेकी । कार्यविशेषाच्चेत्यनेनान्वयिनं सूचयति । तथाहि — विवादपदं स्वो[3]त्पादनप्रवीणज्ञानिका-रणकं विशिष्टकार्यत्वात् चित्रादिवत् । यत्तु कैश्चिच्छरीरस्यापि व्याप्तावनुप्रवेशात् सिद्धिः स्यात्, असिद्धौ वा कर्तुरप्यसिद्धि-

१. 'यो हे', २. 'त्वात् बु', ३. 'व' च. पाठः.

रित्युच्यते। तत्र यद्यङ्कुरादिकं शरीरकर्तृकं कार्यत्वाद् वस्त्रादिवदित्युच्यते, तदा प्रत्यक्षैकदेशविरुद्धो हेतुः। अङ्कुराद्युत्पत्तिसमये शरीरस्यानुपलब्धिबाधितत्वात्। नच तदसिद्धौ कर्तुरप्यसिद्धिः। बाधकाभावात्। नहि कार्यत्वेन वह्न्यादावनुष्णत्वासिद्धौ विनाशित्वस्याप्यसिद्धिरस्ति। अथ क्षित्यादिकमकार्यमकर्तृकं वा शरीराजन्यत्वाद् गगनवदित्युच्यते। तन्न। आद्ये साध्ये अङ्कुरादिभिरनैकान्तिकत्वात्। द्वितीये साध्ये विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् शरीराजन्यत्वं नाम शरीरव्यतिरिक्तजन्यत्वं हेतुः स्यात्, ततश्च साधनविकलो गगनदृष्टान्तः। किञ्च नदीस्रोतःपतितशवकर्मणोऽपि पक्षीकाराच्छरीराजन्यत्वं भागासिद्धम्। अथेश्वरः शरीरी कर्तृत्वात्[1] अस्मदादिवत्। तन्न। आश्रयासिद्धत्वात्। सिद्धौ वा तद्ग्राहकप्रमाणबाधो हेतुश्चासिद्धः। तत्सिद्धौ वा तद्ग्राहकप्रमाणबाधः। ईश्वरः कर्ता न भवति अशरीरत्वाद् मुक्तवदित्युच्यमानेऽप्याश्रयासिद्धो हेतुः। आश्रयसिद्धौ वा प्रतिज्ञापदयोर्व्याघातः धर्मिग्राहकप्रमाणबाधा च। किञ्च चम्पकः कम्पत इत्यादावशरीरस्यापि वृक्षादेः कर्तृत्वाभ्युपगमात् परैरनैकान्तिक इत्यलम्॥

"एको रुद्रो न द्वितीयाय तस्थे य इमाल्लोँकानीशत ईशिनीभिरि"त्याद्यागमाच्चेति॥

इति। स ईश्वरो ज्ञातव्य इति शेषः। द्वितीयायेति सहार्थे तृतीयास्थाने चतुर्थी। ईशिनीभिरिच्छादिशक्तिभिः। इमान् लोकानीशते अधितिष्ठति॥

---

१. 'त्वादन्यत् अस्म' च. पाठः.

अपरात्मनो लक्षणमाह —

**संसारफलोपभोक्तानन्तोऽपरः ॥**

इति[1]। अनन्तः (इति) स्वरूपकथनम्। न विद्यतेऽन्तः कालतो देशतः सङ्ख्यातश्चेत्यनन्तः। नित्यो व्यापकोऽसंख्यश्चेत्यर्थः। तत्सद्भावे च प्रत्यक्षं प्रमाणम। तथाहि — मनोव्यापारे सति प्रत्यात्ममहं[2] सुखी अहं दुःखीति प्रत्ययो दृष्टः। नचासौ शरीराद्यालम्बनः। शरीराद्यप्रतीतावप्यन्धकारेऽहमिति प्रत्ययोत्पादात्। सुखादीनां शरीराद्यनाश्रितत्वाच्च। स्थूलोऽहं कृशोऽहमिति प्रत्ययस्य तु चक्षुषा स्पर्शनेन वा शरीरग्रहणे सत्येव भावात् यद्यपि शरीरालम्बनत्वं, तथाप्यहमित्यभेदप्रत्ययस्तत्र भ्रान्त एव। मम शरीरमिति भेदावभासेन बाधितत्वात् ॥

प्रत्यक्षसिद्धे[3]ऽपि विप्रतिपद्यमानं प्रत्यनुमानमाह —

**स खलु बुद्ध्यादिकार्याणामाश्रयभूतोऽनुमातव्यः ॥**

इति। बुद्ध्यादिकं क्वचिदाश्रितं भावरूपकार्यत्वात् गुणत्वाद् वा, रूपादिवत् ॥

व्याप्तिं दर्शयति —

**नहि कार्यं किञ्चिदनाधारमुपलब्धम् ॥**

इति ॥

सिद्धसाध्यतापरिहाराय भूतचैतन्यं निषेधति —

**नचेन्द्रियाणामाश्रयत्वं युक्तमुपहतेन्द्रियस्य विषयस्मरणायोगात् ॥**

---

१. 'ति न' ङ. पाठः. २. 'त्यक्षमहं', ३. 'क्षप्रसि' च. पाठः.

इति । उपहतं च तदिन्द्रियं चोपहतेन्द्रियम् । तस्य विषये[1] स्मरणाभावप्रसङ्गात् ॥

कस्मादित्यत्राह -

**अन्यानुभूतेऽर्थेऽन्यस्य स्मरणादर्शनात्[2] ॥**

इति । इन्द्रियमनुभवितृ न भवति, संस्कारसद्भावेऽपि सर्वदैवास्मर्तृत्वात् पाषाणादिवत् । अस्मर्तृत्वं च चक्षुराद्यभावेऽपि रूपादिविषये स्मरणादर्शनात् । किञ्चेन्द्रियाणां ज्ञानाधारत्वे एकस्मिन्नपि शरीरे नानाचेतनानां कदाचिद् विप्रतिपत्तिः स्यात् ॥

तर्हि शरीरमेव चेतनमस्त्वित्याशङ्क्याह —

**अत एव शरीरस्यापि बाल्यकौमारादिभेदाभिन्नत्वादस्मरणम् ॥**

इति । यतोऽन्यानुभूतेऽर्थेऽन्यस्य स्मरणं न सम्भवति, अत एव शरीरस्य स्मरणं न सम्भवति । अतश्चानुभवितृत्वमपि नास्तीत्यर्थः । शरीरस्यापि बाल्यकौमारयौवनादिरूपेण भिन्नत्वात् । नच तत्रावस्थाभेदमात्रं नावस्थावद् भिन्नमिति वाच्यम् । महत्त्वभेदस्याश्रयभेदाव्यभिचारात् । तथाहि — विवादपदानि[3] महत्त्वानि भिन्नाश्रयाणि परिमाणभेदत्वाद् बकुलामलकबिल्वादिषु[4] परिमाणभेदवत् ॥

बौद्धराद्धान्तेऽपि स्मरणं नोपपद्यत इत्याह —

**एतेन पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धेः कार्यकारणभावात् स्मरणमपास्तमन्यत्वाविशेषात् ॥**

---

१. 'यत्वस्य' च. पाठः. २. 'णायोगात्', ३. 'नि भि', ४. 'दिप' ङ. पाठः.

इति । अनुभवितृस्मर्त्रोर्भेदेऽपि परस्परकार्यकारणभावस्य विद्यमानत्वात् कारणबुद्ध्यनुभूतं चेत् कार्यबुद्धिः स्मरति, तदोपाध्यायानुभूतमपि शिष्यः स्मरेत् ॥

एतद्दूषणपरिहारायापरमाह —

**कार्पासे रक्ततादिवदिति चेत् ॥**

इति । यथा कार्पासबीजे लाक्षादिना कृता रक्तता भेदाविशेषेऽपि तद्बीजसन्तान एव पुष्पे फले वा रक्ततामुत्पादयति, न पुनर्बीजान्तरसन्ताने, तद्वदुपाध्यायजनितः संस्कारः तस्मिन्नेव सन्ताने स्मृतिं जनयति, न पुनः शिष्ये, तस्य सन्तानान्तरत्वात् ।

तदुक्तं —

"यस्मिन्नेव हि सन्तान आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥"

इति । कर्म पुण्यापुण्यरूपं, कर्म चासौ वासना चेति कर्मवासना । तच्चोपलक्षणमनुभवजनितवासनायाः ॥

परिहरति —

**न । साधनदूषणासम्भवात् ॥**

इति ॥

एतद् विवृणोति —

**अन्वयाद्यभावान्न साधनम् । असिद्धत्वाद्यनुद्भावनान्न दूषणम् ॥**

---

१. 'यबुद्धिज' च. पाठः.

इति। न तावत् स्वपक्षसाधनमिदम्। स्मृतिः कार्यकारणभावाद् भवतीत्यस्य कार्पासे रक्ततावदित्यत्र अन्वयाभावाद्, यत्र न स्मृतिः न तत्र कार्यकारणभाव इति व्यतिरेकाभावाच्च। नापि परपक्षदूषणम्। पूर्वबुद्ध्या[1] अनुभूतार्थमुत्तरबुद्धिर्न स्मरति, अनुभवितुरन्यत्वात् सन्तानान्तरबुद्धिवदित्यस्य हेतोः कार्पासे रक्ततावदित्यनेन असिद्धत्वाद्यन्यतमदोषस्यानुद्भावनात्। किञ्च 'समानानां कार्यकारणभाव एकसन्तान' इति बौद्धानां कृतान्तः[3]। तादृशश्च कार्यकारणभावः शिष्योपाध्यायबुद्धीनामस्तीति प्राक्तनमेव दूषणम्॥

दूषणान्तरमाह —

**नच कार्पासेऽपि निरन्वयविनाशोत्पादे रक्ततोत्पद्यते कार्पासान्तरवत्॥**

इति। निर्गतोऽन्वयः कारणपरम्परा यत्रासौ निरन्वयः सचासौ विनाशश्च निरन्वयविनाशः। तस्मिन् सत्युत्पादो यस्य[4] तत्कार्यस्य स निरन्वयविनाशोत्पादः[5]। तस्मिन् सति कार्पासे रक्तता नोत्पद्यते उत्पत्तुं नार्हति यथा कार्पासान्तरे। तस्मात् तत्रापि बीजावयवानां रक्तानामनुवृत्तावेव कार्पासे रक्ततोत्पद्यते। नच क्षणिकत्ववादिनः[6] पक्षे अनुभवितुः संस्कारस्य वानुवृत्तिरस्ति। तदभावे स्मरणमपि न स्यादिति भावः॥

**एतेनैव क्षणिकत्वं निरस्तम्॥**

---

१. 'वावतिका' ङ पाठः. २. 'दूध्यनु', ३. 'राद्धान्तः' च पाठः. ४. 'न्यस्य', ५. 'दकः' ङ. पाठः. ६. 'कत्ववा' च. पाठः

इति । अनुभवितृविनाशेऽन्यस्य स्मरणं सर्वथा नोत्पद्यते इत्यनेनैतेन यत् सत् तत् क्षणिकं यथा जलधरः सन्तश्च सर्वे भावा इत्यस्यानुमानस्य तर्कबाधा दर्शिता । सर्वस्य पक्षीकारे दृष्टान्ताभावादसाधारणो हेतुः । विवादाध्यासितेति पक्षीकारे जलधरस्यापि द्वित्रक्षणावस्थायित्वात् साध्यविकलो दृष्टान्तः ॥

एकदेशे प्रत्यक्षबाधां दर्शयति —

**प्रत्यभिज्ञाख्येन[1] प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यते ॥**

इति । स एवायं स्फटिको मया वत्सरात् पूर्वं दृष्ट इति पूर्वापरकालाकलितवस्तुग्राहिप्रत्यक्षज्ञानमुत्पद्यते[2] इति प्रत्यक्षैकदेशविरुद्धमनुमानम् । तथा यस्याहमुत्पादमद्राक्षं तस्यैव पौत्रं पश्यामीत्यात्मन्यपि प्रत्यभिज्ञानमुत्पद्यते ॥

परमतमाशङ्कते —

**प्रदीपादिष्विव भ्रान्तमिति चेत् ॥**

इति । पूर्वं प्रज्वलिते विनष्टे पुनरन्येन प्रज्वलितेऽपि प्रदीपे स एवायं प्रदीप इति प्रत्यभिज्ञानं भेदग्राहिप्रमाणपुरुषज्ञानेन बाध्यमानत्वाद् यथा भ्रान्तं तथात्रापीत्यर्थः । यदि वैकस्मिन्नेव[3] प्रदीपे[4] विवादाध्यासितः प्रदीपो नैकः भिन्नकालेन्धनजन्यत्वात् सम्प्रतिपन्नानेकप्रदीपवदित्यनुमानेन

---

१. 'ज्ञानेन', २. 'ते । परमतम्' ङ. पाठः. ३. 'चै', ४. 'पसन्ताने वि' च. पाठः.

बाध्यमानत्वात् प्रत्यभिज्ञानं यथा भ्रान्तं तथा क्षणिकत्वानुमानबाधितत्वादक्षणिकत्वप्रत्यभिज्ञानं भ्रान्तम् ॥

दूषयति —

**न । एकत्र बाध्यत्वेन भ्रान्तत्वे सर्वत्र भ्रान्तत्वकल्पनायामतिप्रसङ्गात् ॥**

इति । एकत्र दीपादिज्ञानस्य बाध्यत्वेन भ्रान्तत्वे सर्वत्रापि तथाभावप्रसङ्ग इत्यर्थः । नच सर्वमपि प्रत्यभिज्ञानं क्षणिकत्वानुमानबाधितमिति वाच्यम् । अनुमानस्य प्रागुक्तयुक्त्या दुष्टत्वात् ॥

भ्रान्तमपि प्रत्यभिज्ञानं बौद्धस्य न सम्भवतीत्याह —

**अनभ्युपगमाच्च । सादृश्यस्य क्षणिकत्वे भ्रान्तिबीजाभावः ॥**

इति । भ्रान्तमपि प्रत्यभिज्ञानं प्रदीपादौ पूर्वोत्तरप्रदीपानां सादृश्ये स्थिरे सत्येव भवति । नचास्ति क्षणिकवादिनः किञ्चित् स्थिरम् । अतो निमित्ताभावान्नैमित्तिकस्य प्रत्यभिज्ञानस्याप्यभावः स्यादित्यर्थः । स्थायित्वे तु प्रमाणं क्रमकार्याण्येककारणजन्यानि कार्यत्वात् सम्प्रतिपन्नैककालकार्यवत् ॥

उपसंहरति —

**तत् सिद्धमेतत् — शरीरादिव्यतिरिक्त आत्मा व्यापको नित्य इति । नित्यत्वं कुत इति चेत् अनादित्वात् । तदेव कथम् । जातमात्रे जन्मान्तरानुभव-**

१. 'न्तक', २. 'त्रे प्राणिनि ज' ङ. पाठः.

**सूचकस्मरणालिङ्गस्य हर्षशोकभयैस्तन्याभिलाषादेरुपलम्भात् ॥**

इति । जातमात्रे प्राणिनीति शेषः । तदानीमेव जातमात्रस्य मृगशावादेः स्तन्यपानाभिलाषेण प्रवृत्तिदर्शनात् स्तन्यपानविषयं सुखसाधनत्वस्मरणमवगम्यते । स्मरणाच्चानुभवः । नचास्मिन् जन्मनि तस्य स्तन्यपानानुभवोऽस्तीति जन्मान्तरानुभवो ज्ञायते । एवं सद्योजातानां मुखप्रसादाद्यनुमिता हर्षादयः सुखदुःखसाधनदर्शनाज्जायमानाः तज्जातीयत्वलिङ्गसुखदुःखसाधनत्वयोः व्याप्तिस्मरणाद् भवन्तीत्यनुमातव्याः ॥

व्यापकत्वे प्रमाणमाह—

**धर्मादेराश्रयसंयोगापेक्षस्य गुरुत्वादिवदाश्रयान्तरे वाय्वादौ क्रियाकर्तृत्वादणिमाद्युपेतस्य युगपदसंख्यातशरीराधिष्ठातृत्वाच्च व्यापकत्वसिद्धिः ॥**

इति । प्रयोगस्तु—धर्माधर्मौ स्वाश्रयसंयुक्त एव आश्रयान्तरे क्रियां जनयतः क्रियाहेतुगुणत्वाद् गुरुत्ववत् । आत्मना व्यभिचारपरिहाराय गुणग्रहणम् । तस्याश्रयान्तरे क्रियाहेतोरपि स्वाश्रयाभावेन स्वाश्रयसंयोगापेक्षाभावात् ॥

युगपदनेकशरीराधिष्ठातृत्वे प्रमाणमाह—

**तथाचोक्तं[2] पुराणेषु—**

**"आत्मनो वै शरीराणि बहूनि मनुजेश्वर!**
**प्राप्य योगबलं कुर्यात् तैश्च सर्वां महीं चरेत् ॥**

१. 'यमोहस्त', २. 'क्तम्—आ' च. पाठः.

**भुञ्जीत विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् ।**
**संहरेच्च पुनस्तानि सूर्यस्तेजोगणानिव ॥"**

इति । श्लोके युगपदिति सम्प्रदायाद् गम्यते ॥

उपसंहरति —

**तदेवमपरमात्मतत्त्वज्ञानं परलोकसद्भावेन[1] परलोकप्रवृत्त्युपयोगित्वादधर्मक्षयहेतुत्वाच्च निःश्रेयससाधनमिति ॥**

इति । एतेन नित्यात्मज्ञानमात्मनि शाश्वतस्नेहजननद्वारेण संसारकारणमिति वदन्तो भाट्टा अपि प्रत्युक्ताः । शाश्वतस्नेहे हि तस्य सांसारिकदुःखपरिहाराय प्रवृत्त्युपपत्तेः । किञ्च नित्यपरलोकाभावे हि,

"यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥"

इति वदतो लोकायतस्येव यथेष्टचेष्टाप्रसङ्गात् । अधर्मक्षयहेतुत्वे च 'तरति शोकमात्मवित्' इत्यागमः प्रमाणम् ॥

परमात्मज्ञानस्य निःश्रेयसहेतुत्वं दर्शयति —

**परमात्मज्ञानं च तदुपासनाङ्गत्वेन अपवर्गसाधनम् ॥**

इति । तस्य परमात्मन उपासनमाराधनं तदुपासनं तस्याङ्गत्वेन[3] ॥

**स चोपासनविधिः ॥**

इति । आराधनप्रकारः ॥

१. 'सम्भवे', २. 'पारलौकिक' च. पाठः. ३. 'न उपायत्वेन' ङ. पाठः.

**क्लेशक्षयसमाधिलाभार्थमनुष्ठानम् ॥**

इति । क्लेशक्षयार्थं समाधिलाभार्थमित्युभयत्रार्थशब्द-सम्बन्धः । येनानुष्ठानेन[1] रागद्वेषमोहाख्याः क्लेशाः क्षीयन्ते, परमात्मनि च चित्तैकाग्रतालक्षणः समाधिः प्राप्यते, तदनुष्ठानं परमेश्वरोपासनविधिरित्यर्थः ॥

अत्र पातञ्जलसूत्रसंवादं दर्शयति —

**तथाचोक्तम् — "तपस्स्वाध्यायेश्वरप्राणिधानानि क्रिया योगः" (२.१) ॥ "क्लेशतनूकरणार्थः समाधिभावनार्थश्च" (२.२) ॥ इति ॥**

इति । यद्यपि पातञ्जलसूत्रे समाधिभावनार्थः क्लेशतनूकरणार्थश्चेति पाठः । तथापीहार्थक्रममाश्रित्यान्यथा पाठः कृतः ॥

सूत्रार्थं कथयति —

**तत्रोन्मादकामादिव्यपोहार्थमाध्यात्मिकादिदुःख-सहिष्णुत्वं तपः ॥**

इति । शरीरान्तर्गतैः व्याधिभिः मानसैश्च कामादिभिः जनितदुःखमाध्यात्मिकम् । आत्मानमधिकृत्य जातमाध्यात्मिकमिति व्युत्पत्तेः । मानुषपश्वादिभूतान्यधिकृत्य जातमाधिभौतिकम् । दैवप्रयुक्तं शीतवातातपादिनिमित्तमाधिकृत्य जातमाधिदैविकम् । एवमेतानि विविधानि दुःखानि शान्तचित्तेन नियमपूर्वकं सहमानस्य यद् दुःखसहिष्णुत्वं तद् निवर्तकधर्म-सञ्चयमधर्मनाशं च कुर्वत् तप इत्युच्यते । चान्द्रायणाद्यप्य-नशनादिजनितदुःखसहनरूपत्वात् तपः । निवर्तकधर्मसञ्च-

---

१. 'न केनचिदनु' ङ. पाठः. २. 'लाभार्थं' ग. पाठः.

याच्च योगप्रवृत्तिहेतुः श्रद्धातिशयो भवति । अधर्मनाशाच्चोन्मादकामव्याध्यादीनां योगान्तरायाणां प्रक्षयः । ततश्चित्तसमाधिः । तपो धर्माधर्मसञ्चयक्षयहेतुरित्यत्र प्रमाणं मन्वादिवचनम् । तथाहि —

"तपोमूलमिदं सर्वं यद् दैवं मानुषं सुखम् ।
तपोमध्यं बुधैः प्रोक्तं तपोन्तं वेददर्शिभिः ॥
महापातकिनश्चैव शेषाश्चाकार्यकारिणः ।
तपसैव सुतप्तेन मुच्यन्ते किल्बिषात् ततः ॥
यत्किञ्चिदेनः कुर्वन्ति मनोवाङ्मूर्तिभिर्जनाः ।
तत् सर्वं निर्दहन्त्याशु तपसैव तपोधनाः ॥"

इति ॥

स्वाध्यायस्वरूपमाह —

**प्रशान्तमन्त्रस्य ईश्वरवाचिनोऽभ्यासः स्वाध्यायः ॥**

इति । ईश्वरवाचिनः क्षुद्रसिद्धिहेतोर्निरासाय प्रशान्तग्रहणम् । परमात्मनिष्ठेन भवितव्यमिति ज्ञापनार्थमीश्वरग्रहणम् । गीतादियोगशास्त्राभ्यासो वा स्वाध्यायः ॥

ईश्वरप्रणिधानमाह —

**परमेश्वरतत्त्वस्य प्रबन्धेनानुचिन्तनमीश्वरप्रणिधानम् ॥**

इति । प्रबन्धेन नैरन्तर्येणानुचिन्तनं पर्यालोचनम् । स्तुतिपुष्पादिभिराराधनं वा । सर्वकर्मणां परमगुरावर्पणं

---

१. 'रु' ङ. पाठः.

वा। सेयं तपःस्वाध्यायेश्वरप्रणिधानात्मिका क्रिया योगसाधनत्वाद् योग इत्युक्ता। स च क्लेशानां तनूकरणार्थ इत्युक्तम्॥

अतः क्लेशस्वरूपमाह —

**समासतो रागद्वेषमोहाः क्लेशाः समाधिप्रत्यनीकाः संसारापत्तिद्वारेण क्लेशहेतुत्वात्॥**

इति। आसक्तिलक्षणो रागः। कोपो द्वेषः। मिथ्याज्ञानं मोहः। समाधिप्रत्यनीका इत्यादिना क्लेशशब्दवाच्यत्वे निमित्तत्वमुक्तम्। मुख्यस्तु क्लेशो दुःखमेव। रागादयो हि समाधिविरोधित्वेन संसारापादनद्वारेण च पुरुषं क्लेशयन्तीति क्लेशा उक्ताः समासत इति पदं तु साङ्ख्यमतनिरासाय। ते हि 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा' इति ब्रुवाणाः पञ्चक्लेशानभ्युपागमन्। तच्चायुक्तम् अस्मिताभिनिवेशयोरेषु चान्तर्भावात। तथाहि — दृग्दर्शनशक्त्योरेकात्मतैवास्मिता। दृक्शक्तिः पुरुषः। दर्शनशक्तिः बुद्धिः। तयोर्भिन्नयोः एकात्मतैवाभेदेन प्रतिपत्तिर्मोह एव। तथा स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः। मरणसन्त्रासजनितः सर्वदाहं भूयासमिति योऽयं सङ्कल्पः सोऽभिनिवेशः। स चासावनादिमरणजनितदुःखानुभवारूढवासनाजन्यत्वात् स्वरसवाहीत्युक्तः। सोऽपि यथासन्तमूढानां दृश्यते तथा विज्ञातपरावरस्य विदुषोऽपि रूढः प्रतीयते। स च मोह एव। अवश्यंभाविनि मरणे जीवज्ञानस्यान्यथाप्रत्ययत्वाद् विदुषा-

१. 'चाना', २. 'पूर्वापरान्तस्य' च. पाठः.

मप्यान्तरदोषान्मोहो दृष्टः । यथा सूर्योदयादिलिङ्गानुमितदिग्विभागस्यापि दिङ्मोह इति ॥

यथा तपस्स्वाध्यायेश्वरप्रणिधानात्मकः क्रियायोगः क्लेशविनाशहेतुः, तथा योगाङ्गान्यपीति तानि दर्शयति —

**तथा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि ॥**

इति । अनुष्ठेयानीति शेषः । अङ्गानि कारणानि । यमादीनां योगहेतुत्वेनाङ्गत्वम् । समाधिस्तु योगात्मकस्याप्युत्तरोत्तरसमाधिप्रकर्षस्य हेतुत्वादङ्गत्वमिति ॥

आदावुद्दिष्टान् यमानाह —

**तत्र देशकालावस्थाभिरनियताः पुरुषस्य शुद्धिवृद्धिहेतवो यमाः अहिंसाब्रह्मचर्यास्तेयादयः ॥**

इति । आदिशब्देन सत्यापरिग्रहयोः परिग्रहः । शुद्धिरधर्मक्षयः । वृद्धिर्धर्मोपचयः । तद्धेतवो ये देशादिभिरनियताः अहिंसादयः सर्वस्मिन् देशे सर्वस्मिन् काले सर्वस्यामवस्थायां न हिंसामि ब्रह्मचर्यं चरामि न चोरयामि नासत्यं वदामि नापि परिगृह्णामीति सङ्कल्पपूर्वकाः, ते यमाः । यदि पुनस्तीर्थपर्वादौ[1] हिंसां न करोमि ब्रह्मचर्यं चरामीति देशादिना नियताः, ते नियमा एव, न यमाः ॥

नियमानाह —

**देशकालावस्थापेक्षिणः पुरुषस्य पुण्यहेतवः**

---

१. 'वैतादौ' च. पाठः.

**क्रियाविशेषा नियमा देवताप्रदक्षिणसन्ध्योपासनजपादयः ॥**

इति। देशविशेषापेक्षि देवताप्रदक्षिणम् । सन्ध्योपासनं कालविशेषापेक्षि। जपक्रिया तु शुद्धावस्थामात्रापेक्षिणी। पुण्यविशेषं प्रति तु देशादिविशेषापेक्षिणी च। 'अनन्तं शिवसन्निधावि'त्यादिवचनात्। एवमन्येऽपि देशादिविशेषापेक्षिणः क्रियाविशेषा नियमा वेदितव्याः। पातञ्जलास्तु— निवृत्तिलक्षणा यमाः प्रवृत्तिलक्षणा नियमा इत्याहुः। तथाचोक्तम्—'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' (२. ३०) शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' (२. ३२) इति। असत्यवचनान्निवृत्तिरिह सत्यं विवक्षितम् ॥

आसनं लक्षयति—

**योगकर्मविरोधिक्लेशजयार्थः करणबन्ध आसनं पद्मकस्वस्तिकादि ॥**

इति। करणानां शरीरावयवानां पादादीनां बन्धः संयमः पद्मकस्वस्तिकाद्यनेकप्रकारः प्राणायामोपयोगी यस्तदासनं [१]स्थिरं सुखं चोपवेशनमित्यर्थः। स च योगक्रियाविरोधिनो ये क्लेशाः क्लेशहेतवो व्याध्यादयस्तेषां जयार्थो विनाशार्थ इति प्रयोजनोपन्यासः ॥

प्राणायामं लक्षयति—

**[२]कोष्ठयस्य वायोर्गतिविच्छेदः प्राणायामो रेचकपूरककुम्भकप्रकारः ॥**

---

१. 'स्थापे', २. 'कौ' न. पाठः.

इति । कोष्ठे शरीरान्तर्देशे भवः कोष्ठ्यो वायुः श्वासप्रश्वासरूपः । तस्य यो गतिविच्छेदः[२] स प्राणायामः । स त्रिविधो रेचकादिभेदेन । तत्रान्तरस्य वायोः बहिर्निस्सारणं रेचकः । बाह्यस्य शरीरे पूरणं पूरकः । पूरितस्य शरीरान्तर्धारणं कुम्भकः ॥

वायुवशीकरणोपायमाह —

**स शनैः शनैर्जेतव्यो वनगजेन्द्रवत् ॥**

इति । यथा गजेन्द्रः शनैःशनैरुपायेन वशीक्रियमाणो महान्तमुपकारं करोति बलादप्रयोगेण गृह्यमाणस्तु विनाशयति, तथा वायुरपि शनैःशनैर्ध्रियमाणो निश्शेषरोगादिमलं विनाश्य समाधिं प्रापयति । अप्रयोगेण बलाद् ध्रियमाणस्तु वातगुल्माद्यनर्थमेव जनयतीति ॥

प्रत्याहारमाह —

**समाधिप्रत्यनीकार्थेभ्यः समन्ताच्चेतसो व्यावर्तनं प्रत्याहारः ॥**

इति । समाधेः प्रत्यनीका विरोधिनो येऽर्थाः[३] पुत्रमित्रकलत्रादयः तेभ्यः समन्तात् सर्वेभ्यश्चेतसो निवर्तनं व्यावर्तनम् । प्रत्याहृते चेतसि बाह्येन्द्रियाण्यपि प्रत्याहृतानि भवन्ति, चेतोधीनत्वात् तत्प्रवृत्तेः । प्रत्याहारेणैव च धरणालाभः ॥

**देशबन्धश्चित्तस्य धारणा ॥**

१. 'दः प्रा', २. 'योर्नि', ३. 'सो व्या' ४. 'त् प्र' इ. पाठः,

इति । शरीरावयवो हृन्नाभ्यादिर्देश इत्येके । बाह्यः सूर्यमण्डलादिरित्यपरे । परमात्मैवात्र देशो विवक्षितः, तदाराधनप्रवृत्तत्वान्मोक्षार्थिन इत्याचार्याः । तत्र देशे चित्तस्य मनसो बन्धः प्रयत्नेन धारणं निश्चलीकरणं यत् सा धारणेति ॥

**तत्र प्रत्ययैकतानता ध्यानम् ॥**

इति । तत्र धारणादेशे प्रत्ययस्य ध्येयालम्बनस्य एकतानता सदृशप्रवाहः मध्ये प्रत्ययान्तरेणापरामर्शो ध्यानम् ॥

**तदेवार्थनिर्भासमात्रं स्वरूपशून्यमिव समाधिः ॥**

इति । तदेव ध्यानमेव । ध्येयाकारमात्रनिर्भासं स्वरूपेण प्रत्ययात्मकेन शून्यमिव इदं ध्येयमहमेवं ध्यायामीति भेदज्ञानशून्यं यदा भवति, तदा समाधिरित्युच्यते ॥

तदेवेत्यादिकं प्रपञ्चयति —

**तदेव ध्यानोत्कर्षान्निवाताचलप्रदीपावस्थानमिवैकत्र[2] चेतसोऽवस्थानं समाधिरभिधीयते ॥**

इति ॥

उपसंहरति —

**एवमेतानि योगाङ्गानि मुमुक्षुणा सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकारदुःखभावनयानभिरतिसंज्ञितं परं वैराग्यं महेश्वरे च परां भक्तिमाश्रित्यात्यन्ताभियोगेन सेवितव्यानि ॥**

१. 'मृष्टो ध्या', २. 'त्रैव चे' च. पाठः.

इति । अनेकप्रकाराणि स्वविभवादतिशयितविभवदर्शनक्षयभावनाजनितानि दुःखानि । तेषां भावनया ब्रह्मादिस्थानेषु अनभिरतिरपेक्षाभावः । तत्संज्ञितं तत्स्वरूपं यत् तत् परं वैराग्यम् ॥

योगाङ्गसेवायाः फलमाह —

ततोऽचिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति । तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति ॥

इति । निर्गतोऽतिशयो यस्मात् तन्निरतिशयं श्रेयो मोक्षः[2] ॥

एतस्मात् शिवज्ञानादेव मोक्ष इत्यत्र प्रमाणं दर्शयति —

तथाचोक्तं —

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय[3] दुःखस्यान्तो भविष्यति ॥"
"तमेव विदित्वातिमृत्युमेति"

इत्यादि च ॥

इति । चर्मेव चर्मवत् । यथा चर्म वेष्टयन्ति तथाकाशं यदा वेष्टयिष्यन्ति मानवाः, तदा शिवं परमात्मानमविज्ञायै स्थितानां मानवानां दुःखस्य सर्वस्यान्तो मोक्षो भविष्यति ॥

उपसंहरति —

तस्माच्छिवसन्दर्शनादेव मोक्ष इति ॥

१. 'तदु' ङ. पाठः. २. 'क्षः ॥ शि', ३. 'देवम' च. पाठः. ४. 'य दु' ङ. पाठः. ५. 'वदर्श' च. पाठः.

इति ॥

मोक्षस्वरूपे विप्रतिपत्तेर्विद्यमानत्वात् प्रश्नपूर्वकं वैशेषिकमतमादौ दर्श-यति —

**कः पुनरयं मोक्ष इति। एके तावद् वर्णयन्ति—समस्तविशेषगुणोच्छेदे[1] सति संहारावस्थायामाकाश-वदात्मनोऽत्यन्तावस्थानं मोक्ष इति ॥**

इति। अत्यन्तं सर्वदावस्थानमित्यनेन प्रलयावस्थातो विशेषकथनम् ॥

वैशेषिकं प्रति कश्चिच्चोदयति —

**कस्मात् ॥**

इति। सुखार्थैव प्रेक्षावतां प्रवृत्तिरुपलब्धा। ततश्च बुद्धिसुखादि[2]विशेषगुणशून्ये मोक्षे प्रेक्षावतां प्रवृत्तिर्न स्यात्। अतः सुखमात्रानुभवो[3]ऽत्राङ्गीकार्य इति भावः ॥

परः परिहरति —

**सुखदुःखयोरविनाभावित्वेन विवेकै[4]हानानुपपत्तेः ॥**

इति। सुखहेतूनामवश्यं दुःखजनकत्वमविनाभावि-त्वम् ॥

मोक्षे प्रवृत्त्यनुपपत्तिरित्यस्य परिहारमाह —

**नच सुखार्थैव प्रेक्षावतां प्रवृत्तिः, कण्टकादिज-नितदुःखपरिहारार्थत्वेनापि प्रवृत्तेरुपलम्भात् ॥**

इति ॥

१. 'दे सं' च. पाठः. २. 'दिसकलवि', ३. 'वोऽङ्गी', ४. 'कज्ञाना' ङ. पाठः.

इदानीमाचार्यः स्वपक्षं दर्शयितुकामो वैशेषिकमतं दूषयति—

मोहावस्थात्वान्मूर्छाद्यवस्थावदत्र विवेकिनां प्रवृत्तिर्न युक्तेत्याहुरन्ये ॥

इति। वैशेषिकेभ्यो वयमिति भावः ॥

दुःखपरिहारार्थमेव प्रवृत्तिर्नोपपद्यत इति दर्शयति—

दुःखे सति सुखोपभोगासम्भवात्[1]। कण्टकादि[2]जनितदुःखपरिहारोऽपि सुखोपभोगार्थ एवेत्यसमो दृष्टान्तः ॥

इति ॥

स्वमते यद्यपि मुमुक्षूणां प्रवृत्तिः सुखानुभवार्था विवेकिप्रवृत्तित्वात् सम्प्रतिपन्नप्रवृत्तिवदित्यनुमानमुक्तं, तथापि प्रश्नपूर्वकमागमप्रमाणं दर्शयति—

कुतो मुक्तस्य सुखोपभोगसिद्धिरिति चेद् आगमात्। उक्तं हि—

"सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।
तं वै मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभिः॥"

तथा—

"आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते"।
"विज्ञानमानन्दं ब्रह्म" इति च ॥

इति। दुःखाभावेऽत्र सुखानन्दशब्दावुपचारेण प्रयुक्तौ ॥

यथा भाराक्रान्तस्य वाहकस्य तदभावे हि सुखी जातोऽहमिति प्रत्यय इत्याशङ्कायामाह—

---

१. 'खस्यास', २. 'दिप', ३. 'णमाह—कु' च. पाठः.

**मुख्यार्थे बाधकाभावान्नोपचारकल्पना ॥**

इति । किञ्च भाराक्रान्तस्य तदभावे वाय्वादिसम्पर्कवशात् सुखोत्पादे सत्येव सुखशब्दस्य प्रयोगः, न पुनर्दुःखाभावे । नचासंवेद्यमानो दुःखाभावः प्रवृत्त्यङ्गमिति मुख्यसुखानुभवाभावे मोक्षे प्रवृत्तिर्न स्यात् ॥

मुल्ये बाधकं परोक्तमाशङ्कते —

**सुखसंवेदनयोर्नित्यत्वान्मुक्ते[2]संसारि[3]णोरविशेषप्रसङ्ग इति चेद् ॥**

इति ॥

परिहरति —

**न । चक्षुर्घटयोः कुड्यादेरिव सुखतत्संवेदनयोर्विषयविषयिसम्बन्धप्रत्यनीकस्या[4]धर्माद् दुःखादेः संसारावस्थायां सद्भावात् । तन्नाशे मुक्तावस्थायां भवति सुखसंवेदनयोः[5] विषयविषयिसम्बन्ध इत्यतो नाविशेषः ॥**

इति । सम्बन्धप्रति[6]बन्धकत्वमात्रेण कुड्यादिकमत्रोदाहृतम् । न पुनः कुड्यादेरिवाधर्मादेर्व्यवधायकत्वं सम्भवति, अमूर्तत्वात् ॥

पुनः परमतमाशङ्कते —

**तस्य सम्बन्धस्य कृतकत्वेन कदाचिद् विनाशप्रसङ्ग इति चेत् ॥**

---

१. 'ख्ये', २. 'क्ति'. ३. 'रावस्थयोर', ४. 'स्य दु', ५. 'योः स' च. पाठः. ६. 'बाधक' ङ. पाठः.

इति । सुखसंवेदनसम्बन्धस्य विनाशे मुक्तस्य पुनः संसार[1]प्रसङ्ग इति भावः ॥

परिहरति —

**न । प्रध्वंसेनानैकान्तिकत्वात् ॥**

इति । विवादाध्यासितः सम्बन्धः कदाचिद् विनश्यति, कृतकत्वाद् घटवदित्यस्य हेतोः प्रध्वंसेनानैकान्तिकत्वमित्यर्थः ॥

परमतमाशङ्कते —

**वस्तुत्वे सतीति चेत् ॥**

इति । सम्बन्धो द्रव्यगुणकर्मसामान्यविशेषसमवायेभ्यो बहिर्भूतः तदन्तर्भूतो वेति विकल्पः ॥

पक्षद्वये दूषणमाह —

**न । द्रव्यादिष्वनन्तर्भावेन तदसिद्धत्वात् ॥**

इति । तस्य वस्तुत्वस्य असिद्धत्वात् ॥

**[2]अन्तर्भावे वा समवायादिभिः सह तत्संवेदनस्य सम्बन्धो न स्यात् ॥**

इति । द्रव्यादिष[3]ट्पदार्थान्तर्भूतो[4] हि सम्बन्धो न समवायस्य वाभावस्य वा सम्बन्धो दृष्ट इति भावः ॥

पुनः परमतमाशङ्कते —

**अदृष्टादिवशात् कर्मकारकं विषयः तज्जनितं ज्ञानं विषयीति चेत् ॥**

१. 'रित्वप्र' ङ. पाठः. २. 'तदभावे' च. पाठः. ३. 'ट्रिप', ४. 'तो न' ङ. पाठः.

इति । न पुनर्ज्ञानार्थयोरन्यः सम्बन्धोऽस्तीति भावः ॥

परिहरति —

**न । ईश्वरज्ञानस्य नित्यस्यार्थैः सह सम्बन्धाभावप्रसङ्गात् ॥**

इति । अस्मदादिज्ञानस्याप्यतीतानागतपदार्थैः सह[1] सम्बन्धो न स्यात् । अतीतार्थस्य कारकत्वा[2]सम्भवादिति[3] ज्ञेयम् ॥

उपसंहरति —

**तस्मात् कृतकत्वेऽपि नित्यसुखसंवेदनसंबन्धस्य विनाशे[4] कारणाभावान्नित्यत्वं स्थितम् । तत्सिद्धमेतन्नित्यं[5] संवेद्यमान[6]सुखेन विशिष्टात्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति ॥**

इति श्रीमत्काश्मीरसूर्यसूरीन्द्रसूनुवासुदेवसूरि-
विरचितायां न्यायसारपदपञ्चिकायाम्
आगमपरिच्छेदः समाप्तः ॥

---

**शुभं भूयात् ।**

१. 'ह हि स', २. 'ण' ङ. पाठः. ३. 'ति विज्ञे', ४. 'श' च. पाठः. ५. 'त्यं', ६. 'मानेन' ङ. पाठः.

## LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

### Trivandrum Sanskrit Series.

| | RS. | AS. | P |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—**मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—**जानकीपरिणयः Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—**काणादसिद्धान्तचन्द्रिका Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—**अभिषेकनाटकम् Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—**वैखानसधर्मप्रश्नः Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—**वास्तुविद्या Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—**नानार्थार्णवसंक्षेपः Nanartharnavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | C | 0 |
| No. 32—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kalidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः Vararucasangraha (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Saṅkara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kaṇḍa, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedânta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhinyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Śilpa) *(out of stock)*. | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nangananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhâravî with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No' 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantraasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumâra. | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isânasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्प **Aryamanjusrimula-kalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Iśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I—1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II—3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31-64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra) | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya), by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśikā of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | | RS. | AS. | P. |
|---|---|---|---|---|
| No. 97— | नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98— | शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumāra. | 2 | 8 | 0 |
| No. 99— | मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100— | काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101— | आर्यभटीयम् **Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102— | दत्तिलम् **Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103— | हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104— | साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No 105— | निधिप्रदीपः **Nidhipradipa** of Siddhaśrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106— | प्रक्रियासर्वस्वम् **Prakriyasarvasva.** (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107— | काव्यरत्नम् **Kavyaratna** (Kāvya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108— | बालमार्ताण्डविजयम् **Balamartandavijaya.** (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 109— | न्यायसारः **Nyayasara** with the commentary of Vāsudevasūri. | 1 | 8 | 0 |

***Apply to:—***

*The Curator*
*for the publication of Oriental Manuscripts,*
*Trivandrum.*

## IN THE PRESS.

1. Āryabhaṭīya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part II.)
2. Haramekhalā (Vaidyaka) of Māhuka with commentary.
3. Ṛksaṁhitā with the Bhāṣya of Skandasvāmin and commentary of Veṅkaṭamādhava (Part II.)
4. Sāhityamīmāṁsā (Alaṅkāra.)
5. Vaikhānasāgama by Marīci.
6. Arthaśāstra of Kauṭalya with commentary in Malayālam (Part II.)
7. Saṅgītakṛtis of Svāti Śri Rāma Varma Mahārāja.
8. Sarasvatīkaṇṭhābharaṇa (Vyākaraṇa) of Bhoja with the Vṛitti of Nārāyaṇa Daṇḍanātha.
9. Āśvalāyanagṛhyamantravyākhyā of Haradattācārya.
10. Prabodhacandrodaya (Nāṭaka) by Kṛṣṇamiśra with the commentary Nāṭakābharaṇa of Govindāmṛtabhagavān.
11. Aṣṭāṅgahṛdaya (Vaidyaka) with the commentary Hṛdayabodhikā of Śrī Dāsa Pandita (Part I)
12. Hṛdayapriya (Vaidyaka) by Parameśvaraśivadvija.
13. Saṅgrāmavijayodaya. (Jyotiṣa)

---

## UNDERTAKEN FOR PUBLICATION.

1. Pāṇinīyalaghuvivṛti. (Vyākaraṇa.)
2. Sarvadarśanakaumudī of Mādhavabhāratī.
3. Skandaśārīraka (Palmistry) with commentary.
4. Saunakīya (Smṛti.)
5. Yogamārtāṇḍa (Yoga.)
6. Tantropākhyāna.

---